र्विराजमानं नानारत्नशिलाबद्धसोपानवापिकैः कामदैः कल्पवृक्षाद्यैरुद्यानैरुपशोभितं दृष्ट्वा समृद्धेऽपि तत्र पुरे निर्जने गृहं गृहं प्रविश्य यदा तां प्रियां क्वापि न दृष्टवान् तदा विचिन्वन्नुत्तुङ्गमेकं मणिमन्दिरमारुह्य तद्द्वारमुद्घाट्य तत्र प्रविवेश । प्रविश्य च तत्र सद्रत्नपर्यङ्कस्थितां वस्त्राच्छादितसर्वाङ्गीं शयानामेककामैक्षिष्ट । 'किं स्यात्सैवेयम्' इति सोत्कण्ठं यावत्तन्मुखमुद्घाटयति तावत्तामेवेप्सितां कन्यकामद्राक्षीत् । तद्दर्शनेन चास्य तदा काऽप्यवस्था ग्रीष्मर्तुमरुपान्थस्य सरिद्दर्शनेनेवाभवत् । साऽप्युन्मीलितलोचना तं कल्याणाकृतिलक्षणं काम्यं प्राप्तं वीक्ष्य संभ्रमाच्छयनमजहत् । ततश्च कृतातिथ्याऽऽनतमुखी फुल्लेक्षणोत्पलन्यासैः पादयोः पूजयन्ती शनैरभ्यधात्– 'महाभाग, को भवान् । कथमिदमगम्यं रसातलं प्रविष्टोऽसि । राजलक्षणाङ्कितनोस्ते तापसव्रतं किमिदम् । महाभाग, यदि ते मयि प्रसादस्तदा एतदाख्याहि' इति ।

एवं तस्याः वचः श्रुत्वा स राजा तां प्रत्युवाच– 'सुन्दरि, अहमङ्गराजो यशःकेतुर्नाम । तापसाज्जनादिहाम्बुधौ दृश्यां त्वामश्रौषम् । ततस्त्वदर्थमिमं वेषं कृत्वा राज्यं विमुच्यागत्य तानुमार्गेणेव प्रविष्टोऽस्मि । तन्मे काऽसि त्वं कथय' इति । तेनैवमुक्ता सा सलज्जा सानुरागा च तमभ्यधात्– 'महाभाग, मृगाङ्कसेन इति श्रीमानस्ति विद्याधराधिपः । तां मृगाङ्कवतीं तस्यात्मजां विद्धि । स पिता मामस्मिन्नगरे एकाकिनीं विमुच्य केन हेतुना सपौरजनः क्वापि गत इत्यहं न जाने । तेनाहं शून्यवसतेरस्मात्सदाविधामुन्मज्ज्य कल्पद्रुमारूढा भवितव्यतां गायामि' इति । एवमुक्तवती सा तस्य मुनेर्वचः स्मरता तेन राज्ञा पेशलैः सुवचोभिस्तथाऽरज्यत यथानुरागविवशा तत्क्षणं तस्य वीरस्य भार्यात्वमङ्गीकृत्य समयमेकमभ्यधात्– 'आर्यपुत्र, प्रतिमासं शुक्लकृष्णचतुर्दश्योरष्टम्यां चानायत्ता चतुर दिवसान् यत्र क्वापि गच्छन्ती अहं त्वया न निवार्या । नापि द्रष्टव्या ।

अत्र हि कारणं विद्यते' इति । ततः 'तथा' इति प्रतिपद्य स राजा गान्धर्वेण विधिना तां परिणीय तत्र तया सह दिव्यभोगसुखं बुभुजे ।

एकदा सा मृगाङ्कवती दिव्यसंभोगसुखावस्थितं तं भूपं प्राह स्म– 'नाथ, त्वमिहैव प्रतीक्षस्व । कार्यार्थं क्वाप्यहं यामि । अद्य सा कृष्णचतुर्दशी मम संप्राप्ता । आर्यपुत्र इहस्थं चामुं स्फाटिकं गृहं मा स्म गमः । माऽत्र वाप्यां निपतितो भव । तर्हि भूलोकं त्वं तत्क्षणं गमिष्यसि' इति । एवमुक्त्वा तमामन्त्र्य तस्मात्पुरात् सा बहिरगात् । राजाऽपि गृहीतखड्गस्तां जिज्ञासुरन्वगमत् । अद्राक्षीच्च तमःश्यामव्यात्तवक्त्रबिलं साकारमिव पातालमागच्छन्तं कमपि राक्षसम् । स च राक्षसो निपत्यैव घोरं रवं कुर्वन् तां मृगाङ्कवतीं वक्त्रे निक्षिप्य निगीर्णवान् । तदवलोक्यैव स राजाऽतिकोपेन सहसा ज्वलन्निर्मोकमुक्तभुजगश्यामलेन महाऽसिना क्रोधाकृष्टेन धावित्वा राक्षसस्य सन्दष्टोष्ठपुटं शिरश्चिच्छेद ।

ततो मोहनिशान्धे विनष्टगतिके कान्तावियोगार्ते नृपेऽकस्मान्मेघमलिनस्य तस्य रक्षसोऽङ्गं भित्त्वोद्योतितदिक्चक्रा विमला चन्द्रमूर्तिरिव सा मृगाङ्कवती जीवन्ती अक्षताङ्गी विनिर्ययौ । तां तथा सङ्कटोत्तीर्णां कान्तां दृष्ट्वा राजा 'एह्येहि' इति वदन् प्रधाव्यैवालिलिङ्ग । 'प्रिये, किमेतत्, स्वप्नोऽयमुत माया' इति तेन पृष्टा सा संस्मृत्य विद्याधरी प्रत्यभाषत– 'आर्यपुत्र, शृणु । नायं स्वप्नः । नापि माया । अयं हि विद्याधरेन्द्रात् स्वपितुर्मम शापोऽभूत् । स मे पिता बहुपुत्रोऽपीह वसन् वात्सल्यान्मया विनाऽऽहारं नाकरोत् । अहं च सर्वदा इह निर्जने शर्वपूजासक्ता चतुर्दश्यां च द्वयोरेव पक्षयोरगच्छम् ।

एकदा चतुर्दश्यामिहागत्य चिरं गौरीं समर्चयन्त्या मे दैवात् समस्तं दिनमवसितम् । तस्मिन् दिने स मम पिता मत्प्रतीक्षः क्षुधितोऽपि मां प्रति कुपितः किञ्चिदपि नाभुङ्क्त, नाप्यपिबत् । ततो रात्र्यामुपेतायां सापराधां मामधोमुखीं

भवितव्यताबलादस्रेहः शपति स– 'यथा त्वं मामवज्ञाय क्षुधार्तं सर्वं दिनं विस्मृतवत्यसि, तस्मान्मासि मासि अष्टम्योश्चतुर्दश्योश्च हरार्चनरसात् पुरात् बहिर्यान्तीं त्वां कृतान्तसंत्रासो नाम राक्षसो निगरिष्यति, ततश्च तस्य हृदयं भित्त्वा भित्त्वा निरेष्यसि। शापं तां च निगरणव्यथां न स्मरिष्यसि। एकाकिनी चात्र स्थास्यसि' इति शापं ददत् स मयानुनीतः ध्यात्वा ध्यात्वा शापान्तमकरोत्– यदाङ्गपतिर्यशःकेतुस्तव भर्ता भूत्वा राक्षसेन निगीर्णां त्वां दृष्ट्वा तं राक्षसं निहनिष्यति तदा त्वं तस्य हृदयान्निर्गता शापान्मोक्ष्यसे। संस्मरिष्यसि च शापादिसर्वा निजा विद्याः –इति शापान्तमुक्त्वा, इह मामेकाकिनीं मुक्त्वा सपरिच्छदो निषधाद्रिं गतः। अहं तदादेशेन शापमोहादिहावसम्। स शापश्चास्य मे क्षीणः, जाता च सर्वत्र स्मृतिः। तदद्य तातपार्श्वगमनाय निषधाद्रिं व्रजामि। शापान्ते स्वगतिं प्राप्स्यामीत्येष मे नियमः। त्वमिहास्स्व, व्रज वा स्वराष्ट्रम्, अत्र ते स्वातन्त्र्यम्' इति।

एवं तयोक्तो नृपतिर्दुःखितस्तामभ्यर्थयामास– 'सुन्दरि, सप्ताहावधि त्वया न गन्तव्यम्। सुमुखि, प्रसीद, इहोद्याने त्वया सह क्रीडन्नौत्सुक्यं विनोदयामि। ततस्त्वं पितुः स्थानं गमिष्यसि। अहं च स्वस्थानं यास्यामि' इति।

ततः सः 'तथा' इति प्रतिपन्नया तया कन्यया समं तस्मिन्नुद्याने सजलोत्पलनेत्रासु 'मा स्म यात्वस्मान् विहाय' इति हंससारसनिचयैः रुवन्तीष्विवोक्षिप्तवीचिहस्तासु वापीषु षडहं रेमे। ततः सप्तमेऽहनि स राजा युक्त्या यत्र भूलोकप्रापिणी द्वारवापिकास्ति तत्र गृहे तां कान्तामनयत्। तत्र चागत्य तां कण्ठे गृहीत्वा तस्यां वाप्यां निपत्य सहसा तया सह स्वपुरोद्याने वापीमध्यादुत्तस्थौ।

तत्र कान्तासमेतं प्राप्तं तं भूपं दृष्ट्वोद्यानपालकाः प्रहृष्टा गत्वा मन्त्रिणं दीर्घदर्शिनं जगदुः। सोऽप्यागत्य पादयोः पतित्वा तमानीतेप्सिताङ्गनं सपौरो-

ऽभ्यन्तरं प्रावेशयत् । 'अहो कथं सैषा दिव्याङ्गनाऽनेन राज्ञा प्राप्ता या व्योम्नि विद्युदिव क्षणदृश्या मया दृष्टा । धात्रा ललाटाक्षरपङ्क्तिषु यस्य यल्लिखितं तत्तस्याऽसंभाव्यमप्यवश्यमुपतिष्ठते ।' इति तस्मिन् मन्त्रिमुख्येऽन्यस्मिंश्च जने ध्यायति, सा मृगाङ्कवती तं भूपतिं स्वदेशागतं दृष्ट्वा पूर्णसप्ताहा वैद्याधरीं गतिं गन्तुमियेष । परं तदोत्पतनी विद्या स्मृतौ नाविरासीत् । ततः सा मुषितेव परं विषादमगमत् ।

'कथमेवं विषण्णासि प्रिये, वद' इति राज्ञाऽभिहिता सा विद्याधरी तमब्रवीत् – 'अहं शापमुक्तापि यदियच्चिरं त्वत्स्नेहपाशसंयमिता स्थिता तेन मम विद्या दिव्या गतिश्च नष्टा' इति । तदाकर्ण्य राजा– 'ममेयं विद्याधरी सिद्धा' इति प्रहृष्टो महान्तमुत्सवं चकार । तदवलोक्य स दीर्घदर्शी मन्त्री निशि गृहं गत्वा शयनीयं प्राप्य च सहसा हृदयस्फोटेन व्यपद्यत । ततो राजा स्वयं धृतराज्यभारस्तया मृगाङ्कवत्या सह चिरं स्वर्गसुखमनुभवन् तस्थौ ।

इति कथामाख्याय स वेतालः पर्यपृच्छत्– 'राजन्, स्वामिनस्तथाऽभ्युदये सम्पन्ने तस्य महामन्त्रिणो हृदयं यत्स्फुटितं तस्य को हेतुः । किं दिव्याङ्गना मया नाऽऽप्ता इति शुचा । अथ वा राज्यार्थिनः पुना राजागमनजेन दुःखेन । यदि जानन्नप्येतन्मह्यं न वक्ष्यसि तदा ते धर्मो विनङ्क्ष्यति । यास्यति च ते शिरः शतधा खण्डितम्' इति । एतदाकर्ण्य राजा तं वेतालमवादीत्– 'योगीश्वर, नैतद्द्वयमपि शुभचरिते मन्त्रिवरे संभाव्यते । किं तु –येन भूभुजा स्त्रीमात्रानुरागात् राज्यमुपेक्षितम्, अधुना तु दिव्यस्त्रीरक्तस्य तस्यात्र का वार्ता । तन्मे कष्टे कृतेऽपि प्रत्युत दोष एव समधिको जातः– इति विभावयतस्तस्य मन्त्रिणो हृदयं स्फुटितमिति मन्ये' इति । एवमभिहितो वेतालः स मायी तत्क्षणात् निजमेव निलयं जगाम । राजाऽपि तमवाप्तुं पुनस्त्वरितः तमेव शिंशपातरुमाससाद ।

## (ख) शुकसारिकयोर्विवादः ।

अथ राजा पुनरपि तं वेतालमानेतुं तं शिंशपातरुमभ्यगच्छत् । प्राप्य च तत्रस्थं मृतदेहगतं तं स्कन्धे गृहीत्वैव तूष्णीं गन्तुं प्रावर्तत । अथ प्रयान्तं तं स वेतालः पुनरवोचत्– राजन्, निशि गमागमं कुर्वन् नितरां खिद्यसे । अतस्त्वां विनोदयन् पुनः कथां वर्णयामि, शृणु—

अस्ति पाटलिपुत्रं नाम भूमण्डलख्यातं नगरम् । पुराऽऽसीत् तत्र नृपतिः विक्रमकेसरी नाम, यं गुणानामिव रत्नानामाश्रयं विधिर्व्यधात् । तस्य विदग्ध-चूडामणिर्नाम दिव्यविज्ञानवान् सर्वशास्त्रवित् शापावतीर्ण एकः शुक आसीत् । तस्य नृपस्यात्मजः शशी नाम शुकोपदेशेन मगधदेशभूपतिकन्यां चन्द्रप्रभां नामोपयेमे । तस्या अपि राजपुत्र्यास्तथाभूता ज्ञानविज्ञानशालिनी सोमिका नाम शारिकाऽभूत् । अथ तौ शारिकाशुकौ एकपञ्जरस्थौ राजवेश्मन्यास्ताम् ।

एकदा साभिलाषः स शुकस्तां शारिकामब्रवीत्– 'सुभगे, एकशय्यासनाहार-विहारेषु मां भज' इति । शारिकाऽब्रवीत्– 'नाहं पुरुषसंसर्गं कर्तुमिच्छामि, यतः पुरुषा दुष्टाः, कृतघ्नाश्च' इति । ततः शुकेन– 'न पुमांसो दुष्टाः, स्त्रिय एव दुष्टाः, नृशंसहृदयाश्च' इति कथिते तयोर्विवादः समजनि । ततस्तौ पक्षिणौ क्रीतदासत्व-क्रीतदासीत्वपणं कृत्वा परस्परं विवादनिष्पत्तये राजपुत्रमुपेयतुः । स राजपुत्रः पितुरास्थानगतो विवादपदं श्रुत्वा– 'कथं पुरुषाः कृतघ्नाः, ब्रूहि तत्त्वम्' इति शारिकाम् अपृच्छत् । ततः सा– 'शृणोतु राजपुत्रः' इति समाख्याय स्वपक्ष-समर्थनाय पुंदोषाख्यायिनीं कथां कथयितुमुपचक्रमे–

"अस्ति कामन्दकी नाम विख्याता नगरी । तस्याम् अर्थदत्तो नाम महाधनो वणिक् प्रतिवसति स्म । कालेन तस्य धनदत्तो नाम तनयः समुदपद्यत ।

अथ पितरि स्वर्गते स युवा द्यूतादिसङ्गेन भृशमुच्छृङ्खलोऽभवत् । धूर्ताश्च मिलितास्तं सर्वथा प्राशंसयन् । दुर्जनसङ्गतिरेव व्यसनवृक्षस्य मूलम् । अचिरेण च व्यसनासक्ततया क्षीणसर्वस्वो दारिद्र्येण च लज्जितः स्वदेशं त्यक्त्वा भ्रमितुं देशान्तराणि समारभत् । गच्छंश्च चन्दनपुरं नाम नगरमाससाद, विवेश च भोजनार्थी कस्यापि वणिजः सदनम् । स च वणिक् कुमारं दृष्ट्वा, पृष्ट्वा च कुलं, ज्ञात्वा च कुलीनं, सत्कृत्य च, दैवयोगात् प्राप्तममन्यत, अददाच्च तस्मै सधनां रत्नवतीं नाम सुताम् । ततः स धनदत्तः कृतविवाहस्तस्मिन्नेव श्वशुरवेश्मनि तस्थौ ।

गच्छत्सु च दिनेषु सुखेन विस्मृतदुर्गतिः पुनर्व्यसनोत्सुकः स्वदेशं गन्तुकामोऽभवत् । ततः स शठः कथमपि श्वशुरं तं तन्मात्रापत्यमनुनीय तामलंकृतां भार्यां रत्नवतीमेकया वृद्धया स्त्रिया सहितां गृहीत्वा स्वदेशाय प्रतस्थे । क्रमेणाटवीं प्राप्य दूरात् तस्करभयमुक्त्वा तस्या भार्यायाः सर्वाण्यलङ्करणानि स्वीचकार । पश्यतु युवराजः, द्यूतवेश्यादिव्यसनिनां कृतघ्नानां हृदयं निस्त्रिंशकर्कशम् । स च पापात्माऽर्थार्थं तां गुणवतीमपि भार्यां हन्तुं तया वृद्धया युतां क्वापि श्वभ्रे न्यक्षिपत् । क्षिप्त्वैव तस्मिन् प्रस्थिते दुरात्मनि सा वृद्धा तस्मिन्नेव व्यपद्यत । सा तु रत्नवती कथञ्चिदुत्तृणगुल्मादिकमालम्ब्य करुणं क्रोशन्ती सशेषत्वादायुषः समुत्थिता, विक्षताङ्गी पदे पदे मार्गं पृष्ट्वा, यथाऽऽगतेनैव पथा कृच्छ्रात् पितुः सदनमागमत् ।

'कथमकस्मात् त्वमीदृशी प्रत्यावृत्ता' इति ससंभ्रमं मात्रा पित्रा च पृष्टा सा साध्वी एवमभाषत– 'मुषिताः स्म पथि तस्करैः, नीतश्च बलात् स मे पतिः, वृद्धा च श्वभ्रे निपत्य मृता, अहं पुनर्दैवात् प्राणिमि । केनचित्कृपालुना पथिकेनाहमुद्धृता श्वभ्रात्' इति । एवमुक्तवतीं मात्रा पित्रा च शोचता समाश्वासिता सा भर्तृप्राणा रत्नवती तस्थौ ।

अथ कालेनासौ धनदत्तो द्यूतेन क्षपितसर्वधनः पुनरचिन्तयत्– 'गच्छामि पुनः श्वशुरगृहाद्धनमानयामि, तत्र गत्वा तं श्वशुरं– गृहे स्थिता कुशलिनी तव

दुहितेति वक्ष्यामि' इति । एवं स मनसि सङ्कल्प्य श्वशुरसदनं पुनरवाप । आगतं च तं दूरात् सा पतिप्राणा भार्याऽद्राक्षीत् । दृष्ट्वैव धावित्वा च सा तस्य पापस्य पादयोर्निपत्य तत्सर्वं पितृभ्यां मृषा निवेदितं व्यजिज्ञपत् । दुष्टेऽपि पत्यौ साध्वीनां मानसं नान्यथावृत्ति भवति । ततः स दुरात्मा निर्भयः श्वाशुरं गृहं प्रविश्य तं पादयोः प्रणनाम । स च तं जामातरं दृष्ट्वाऽभ्यनन्दत् । अकरोच्च दिष्ट्यायं मे जामाता जीवन् चोरैर्मुक्त इति बन्धुभिः सह महोत्सवम् । ततः स धनदत्तः सुखेन श्वाशुरीं समृद्धिं भुञ्जानस्तया रत्नवत्या पत्न्या सह रेमे ।

एकदा स पापीयान् रात्रौ यच्चकार तदवाच्यमपि कथाभङ्गभयात् कथ्यते, शृणु राजपुत्र । असौ पापमतिर्विश्वस्तसुप्तां तां रत्नवतीं निशि हत्वा तदाभरण-सञ्चयमपहृत्यालक्षितः स्वदेशं प्रायात् । ईदृशाः पुरुषाः पापाः कृतघ्नाः'' इति शारिकया कथिते राजपुत्रः हसन्- 'त्वमिदानीं वद' इति शुकमभाषत । ततः स शुकः प्राब्रवीत्- ''देव, स्त्रियः विषमसाहसा दुश्चरिताः पापाश्च । तथा चात्र कथामेकां वर्णयामि, शृणोतु कुमारः—

अस्ति हर्षवती नाम नगरी । तत्राभूत् धर्मदत्तो नाम बहुकोटीश्वरो वणिजा-मग्रणीः । तस्य वसुदत्ता नाम्नी रूपेणाऽसामान्या प्राणेभ्योऽपि प्रियतमा कन्या-ऽभवत् । सा तु तेन समानधनयौवनकुलशालिने नेत्रचकोरामृतरश्मये समुद्रदत्ता-ख्याय वणिक्पुत्राय ताम्रलिप्तनिवासिने प्रदत्ता । कदाचित्सा स्वदेशस्थे पत्यौ पितृगृहे स्थिता दूरात् कमपि पुरुषं युवानं कान्तविग्रहं ददर्श । दृष्ट्वैव सा चपलाः स्मरमोहिता गुप्तं सखीमुखेनानीतं प्रच्छन्नकामुकं तं भेजे । इत्थं प्रतिरात्रं सा तदेकासक्तमानसा तेन सह रममाणा सुखं बुभुजे ।

अथैकदा तस्याः पतिः स्वदेशादागतः श्वशुरयोः परां प्रीतिमवर्द्धयत् । दिने चोत्सवेनातिक्रान्ते सा वसुदत्ता मात्रा कृतभूषणा निशि वासगृहं प्रेषिता शय्या-

स्वाधीनं पतिं भेजे । तेन रतिं प्रार्थिता साऽन्यमानसाऽलीकसुप्तिमकरोत् । क्रमेण सोऽपि पतिः पानमत्तोऽध्वश्रान्तश्च निद्रया जह्रे । ततः सर्वस्मिन् सुकरीतजने क्रमेण सुप्ते कश्चिच्चौरः सन्धिं भित्त्वा तस्मिन् वासगृहे प्राविशत् । सा च वणिङ्नन्दिनी तत्काले तमपश्यन्ती समुत्थाय स्वजारकृतसङ्केता निभृतं निरगात् । तदालोक्य स चौरो विघ्निताभिलाषो व्यचिन्तयत्– 'येषामाभरणानामर्थेऽहं प्रविष्टः तैरेवाभरणैर्वृतैषा निशीथे निर्गता, तत् क गच्छतीति द्रष्टव्यम्' इति पर्यालोच्य निर्गत्य च स चौरस्तां वणिक्सुतामनुययौ ।

सापि पुष्पादिसंभारहस्तया सख्या संयुता गत्वा बाह्योद्यानं नातिदूरगं प्रविवेश, ददर्श च तत्र सङ्केतस्थानमागतं नगररक्षिभिश्चौरबुद्ध्या पाशं कण्ठे दत्त्वा निहत्य वृक्षे लम्बमानं तं प्रच्छन्नकामुकम् । सा तु तदवलोक्य विह्वला– 'हा! हतास्मि' इति वादिनी कृपणं विलपन्ती भूमौ पपात, रुरोद च । अथ तं निजकामुकं वृक्षादवतार्योपवेश्य च गात्रासुमनसामैरलंकारैः पुष्पैश्चालंचकार । यावच्च सा तस्य मुखमुन्नमय्य कामार्ता परिचुम्बति तावत्स निर्जीवः कामुको वेतालानुप्रविष्टः सन् दन्तैस्तस्या नासिकां चिच्छेद । तेन सा विह्वला तस्मात्प्रदेशात् सव्यथाऽपसृतापि– 'अहो किंस्विज्जीवत्यसौ' इति पुनरेत्य यावत्पश्यति स्म, तावत्तं वीतवेतालं निश्चेष्टं पतितं मृतं निश्चित्य सा भीता परिभूता च रुदती शनैर्गृहं प्रत्याजगाम । स चालक्षितः प्रच्छन्नस्थितश्चौरः सर्वमेतद्व्यलोकयदचिन्तयच्च– 'अहो किमिदं पापयाऽनया कृतम् । हा स्त्रीणमाशयः कथमीदृग्भीषणः । तदिदानीमप्येषा किं नु कुर्यात्' इति विचिन्त्य कौतुकात् स चौरो भूयोऽपि दूराच्चामनुससार ।

सा च पापिनी गृहं प्रविश्यैवोच्चकैः प्ररुदती एवमब्रवीत्– 'परित्रायध्वं माम्, एतेन दुष्टेन भर्तृरूपेण शत्रुणा मम निरपराधाया नासिका छिन्ना' इति ।

ततः रोदनमाकर्ण्य सहसा तत्परिजनाः सर्वे ससंभ्रममुदतिष्ठन्, पतिश्च प्रबुबुधे । अथ तत्पिता समेत्य तां छिन्ननासिकां दृष्ट्वा क्रुद्धस्तं जामातरं बन्धयामास । स चेतिकर्तव्यतानिमूढस्तदानीं बध्यमानोऽपि मूकवदतिष्ठत्, न किमपि प्राब्रवीत् । अथ क्रमेण सर्वेषु विबुद्धेषु शृण्वत्सु, तस्मिंश्च चौरे सर्ववृत्तान्तज्ञे तस्मादपसृते, गतायां शनैः शर्वर्याम्, स वणिक्सुतस्तेन श्वशुरेण राजान्तिकं नीतः । सा च छिन्ननासा वसुदत्ता तत्राऽऽगता । राजा च सर्वं वृत्तान्तं श्रुत्वायं स्वदारद्रोहीति निर्णीय तस्य वणिक्सूनोर्वधं समादिशत् ।

ततस्तस्मिन्निरपराधे न किमपि विजानति वणिक्सुते वध्यभूमिं नीयमाने स चौरः समुपगम्य राजपुरुषानब्रवीत्— 'अकारणमयं कथं वध्यभूमौ नीयते । यथा-वृत्तमहं सर्वं वेद्मि । मां राजान्तिकं नयत । सर्वमहं वदिष्यामि' इति । एवमुक्तवन्तं तं ते सर्वे राजपुरुषा राजान्तिकमनयन् । स च चौर आमूलात् सर्ववृत्तान्तं राज्ञे न्यवेदयत्, अब्रवीच्च— 'देव न चेन्मद्वचसि तव प्रत्ययस्तत् सा नासा तस्य शवस्य मुखेऽद्यैव निरीक्ष्यताम्' इति । तच्छ्रुत्वा वीक्षितुं भृत्यान् प्रेष्य, तेषां च मुखात् सत्यमवेत्य स राजा तं वणिक्पुत्रं वधदण्डाद्विमुच्य, तां दुष्टां वसुदत्तां कर्णावपि छित्त्वा, देशान्निरवासयत् । तं च तत्पितरं वणिजं सर्वस्वम-दण्डयत् । तुष्टश्च तं चौरं पुराध्यक्षमकरोत् ।

राजपुत्र, इत्थं निसर्गविषमाः शठा योषितः'' इति वदन्नेव शुकश्चित्ररथो नाम गन्धर्वराजो भूत्वा, इन्द्रशापक्षयाद्दिव्यरूपमास्थाय दिवमगात् । सा च सारिका सपदि सुराङ्गना तिलोत्तमा भूत्वा तथैव क्षीणशापा दिवमुदपतत् । तयोस्तु तस्यां सभायां विवादो न निर्णीतः ।

इत्याख्याय स वेतालस्तं नृपमपृच्छत्— 'राजन्, वदतु भवान्, पापाः पुरुषा, उत योषितः । जानतस्तेऽकथयतः शिरो खण्डशः पतिष्यति' इति ।

एतत् स्कन्धवर्तिनो वेतालस्य वचनमाकर्ण्य स भूपतिस्तं योगीश्वरं वेतालमवादीत्–'वेताल, कोऽपि च तादृक्पुरुषः क्वचित् कदाचिद्दुराचारः, काऽपि च तादृशी स्त्री क्वचित् कदाचिद्दुराचारा, सर्वे पुरुषाः सर्वाश्च स्त्रियः सर्वथा दुष्टा इति वक्तुं न शक्यते' इति। एवमुक्तवतो नृपस्य स्कन्धात् स वेतालः क्वापि प्रनष्टोऽभूत्। राजा च पुनस्तदानयने यत्नमकरोत्।

* * *

# ३. चारुदत्तकथा

आसीदुज्जयिन्यां चारुदत्तो नाम ब्राह्मणः। स युवा दीनानुकम्पी परोपकारनिरतः स्वयं ऋद्धिमानप्यर्थिभ्यो मित्रेभ्यश्च सर्वस्वमात्मीयं दत्त्वा दरिद्रो बभूव। तस्य कदाचित् कामदेवायतने देवतोपस्थानार्थमागतया वसन्तसेनया गणिकया सह परिचयः सञ्जातः। सा च सर्वसुन्दरीणामुपरि वर्तमाना वेश्याजनसाधारणं धनलोभं विहाय 'आत्मीयेनापि धनव्ययेन गुणवानेव युवा सेवितव्यः' इति कृतनिश्चया सर्वगुणानामेकनिवासभूते चारुदत्ते दृढानुरक्ता बभूव। कल्याणचरित्रश्चारुदत्तोऽपि यौवनसुलभेन कामेनाकृष्टहृदयस्तस्यामनुरागमाबबन्ध। तदा प्रभृति तामेव स्मृत्वा परिक्षीणविभवतयाऽप्रतीकारं कामं कृच्छ्रेणान्तर्नियमयन् कतिपयं कालमयापयत्।

अथ कदाचिदस्तमिते सूर्ये चारुदत्तः सायं सन्ध्यामुपास्य मैत्रेयाख्येन वयस्येन सहैकत्र बलवतीं वसन्तसेनागतामुत्कण्ठामपरत्र दुःसहदुःखप्रदं दारिद्र्यं चानुस्मृत्यानुशोचन्नास्त। तदानीं बलवत्यन्धकारे झटिति बहिर्द्वारकवाटमुद्घाट्य

सहसान्तःप्रविष्टा साध्वसकम्पमानगात्री वसन्तसेना त्वरिततरमभिपत्य– 'आर्य परित्रायस्व माम्' इति तस्य पादयोः पपात । चारुदत्तेन च 'न भेतव्यम् । ब्रूहि कुतः परित्रातव्या भवती' इति पृष्टे सैवं बभाषे– 'आर्य, कामदेवायतनोत्सवादारभ्य गुणनिष्क्रीता दासी भवन्तमुद्दिश्य प्रस्थिताहं मध्येमार्गं मम दौर्भाग्येन दुर्वृत्तस्य राजश्यालस्य संस्थानकस्य दृष्टौ पतितास्मि । धूर्तोऽसावनिच्छन्तीमपि मां बलादनुबध्नन् बलवत्यन्धकारे वृक्षषण्डमनुप्रविष्टामपि भूषणशिञ्जितेनोपलक्ष्यानुगच्छन् द्वारि तिष्ठति' इति । श्रुत्वैतच्चारुदत्तो मैत्रेयमेवमादिदेश– 'गच्छ मद्वचनात् ब्रूहि राजश्यालसंस्थानकम्– 'ममेयं गुणानुरक्ता वसन्तसेना, विरमास्या अनुबन्धात् –इति' इति । मैत्रेयेण बहिर्गत्वैवमुक्ते संस्थानक एवमब्रवीत्– 'उच्यतां मद्वचनाच्चारुदत्तः,– मयाभिसार्यमाणा वसन्तसेना तव गेहं प्रविष्टा । तां शीघ्रमेव प्रस्थाप्य निर्यातय । नो चेन्मरणान्तिकं वैरं भविष्यतीति' इति । चारुदत्तस्तत्सन्देशं मूर्खोऽयमित्यनाकर्णितेनावज्ञाय वसन्तसेनया सह संलपन्नास्त । सा तु कञ्चित्कालं स्थित्वैवमब्रवीत्– 'आर्य, अतिक्रामति कालो गृहगमनाय । सर्वदा पापा मां भूषणकृतेऽनुसरन्ति । तदिच्छामि इदमलङ्करणजातमार्यस्य गृहे निक्षेप्तुम्' इति । दाक्षिण्यपरवशश्चारुदत्तोऽपि वसन्तसेनायाः प्रथमं प्रणयं विहन्तुमनिच्छन् तत्संरक्षणाय मैत्रेयं नियुज्य स्वयमेवानुव्रज्य तां स्वगृहं प्रापयामास ।

परेद्युः प्रभाते वातायनसमीपे सुखोपविष्टा वसन्तसेना परिजनं विसृज्य एकाकिन्यास्त । तदा शर्विलको नाम ब्राह्मणः समागत्य मदनिकानाम्नीं चेटीं विविक्ते दृष्ट्वा सुचिरं सानुरागमवलोकयामास । पूर्वमेव तस्मिन्ननुरक्तया तया स्वागतेनाभिनन्दितः । शर्विलको वस्त्रखण्डपिनद्धमाभरणजातं तस्या हस्ते दत्त्वा साशङ्कं पार्श्वेषु दत्तदृष्टिरेवमाबभाषे– 'मदनिके, त्वयि चिरानुरक्तोऽहं त्वामनल्पेन धनेन निष्क्रीय दास्यान्मोचयितुं चौर्येण मयेदमासादितम् । तथाहि– पूर्वेद्युर्निशीथे निःशब्दे नगरे, गाढान्धकारावृते दिगन्तराले, कर्णीसुतविद्यायाम् अनितरसाधारणे

नैपुण्यमावहन्नहं चारुदत्तस्य गृहमगच्छम् । तत्र यथाविधि भित्तौ सन्धिं कृत्वान्तः प्रविश्य सुप्तौ मैत्रेयचारुदत्तावपश्यम् । तदा मैत्रेयहस्तस्थं जर्झरस्नानशाटीनिबद्धं दीपप्रभयोद्दीपितमाभरणजातं दृष्टवान् । आग्नेयेन कीटेन दीपं निर्वाप्य निःशब्द-पद-निरुं गत्वा मैत्रेयहस्तादिदमादाय निरगाम् । तद्गच्छ वसन्तसेनायै समर्प्येद-मात्मानं मोचय' इति । तच्छ्रुत्वाभरणजातं च दृष्ट्वा मदनिका 'अहो अन्याय्य-माचरितं भवता । वसन्तसेनया चेदं चारुदत्तस्य गृहे न्यासीकृतमासीत्' इति प्रत्युवाच । अथाजानता मयेदं कृतमित्यनुतप्तहृदयः किंकर्तव्यतामूढः शर्विलकश्चिरं चिन्तयामास । मदनिका तस्य कर्णे 'एवं कुरु' इत्यसूचयत् । ततस्तस्याः सूचना-नुसारेण, चारुदत्तेन प्रेषित इव भूत्वा वसन्तसेनायाः समीपमागम्यैवमुवाच । 'वसन्तसेने, मम वयस्यश्चारुदत्तो गृहस्य जर्झरत्वाद्दूरक्षमिति कृत्वेदमाभरणजातं भवत्यै प्रतिनिर्यातयति, तत्प्रतिगृह्यताम्' इत्युक्त्वा प्रददौ । वातायनसमीपोपविष्टा सा वसन्तसेना सर्वं मदनिकाशर्विलकयोः संवादं श्रुतवती । तथापि वसन्तसेना तदाभरणजातं स्वीकृत्य सव्याजं शर्विलकमब्रवीत्— 'आर्य, चारुदत्तेनायमपि सन्देशः प्रदत्तो यत्प्रतिदानत्वेन मदनिका भवते प्रदेया इति । तां प्रतिगृह्यताम्' इति । विस्मयानन्दपरवशः शर्विलकस्तां मदनिकां प्रतिगृह्य तया सह निर्जगाम ।

चारुदत्तस्तु वसन्तसेनया न्यासीकृतमाभरणजातं चोरेणापहृतमिति विज्ञाय नितरामशोचत् । विदितवृत्तान्ता धूतानाम्नी चारुदत्तपत्नी स्वीयां रत्नावलीं तत्प्रति-मूल्यत्वेन दातुं मैत्रेयस्य हस्ते न्यक्षिपत् । गत्यन्तराभावात् तां रत्नावलीं स्वीकृत्य चारुदत्तो वसन्तसेनायै मैत्रेयहस्तेन तां प्रेषितवान् । किमपि मनसि ध्यायन्ती वसन्तसेना तामादाय मैत्रेयहस्तात् 'आर्यचारुदत्तं प्रेक्षितुं प्रदोषेऽहमागमिष्यामि' इति प्रतिसन्दिदेश ।

अथास्तमिते सूर्ये दुर्दिनद्विगुणितान्धकारेणावृते दिगन्तराले मन्मथावेश-विवशा वसन्तसेना चारुदत्तगृहं प्रति प्रस्थिता । तत्कालोचितमभिसारिकावेषं धृत्वा

गच्छन्त्यास्तस्याः सतडिन्मेघगर्जनादीनां भयकारणानां परिगणनापि नासीत्। वर्षधाराभिस्ताड्यमाना सा चेट्या सह चारुदत्तस्य सदनमाजगाम। पूर्वमेव सोत्कण्ठश्चारुदत्तस्तां दृष्ट्वा परमानन्दभरितः स्वागतेनाभ्यनन्दत्। निनाय च प्रेमरसनिर्भरहृदयां तां गृहाभ्यन्तरम्।

अथ प्रभाते सुखप्रसुप्तां वसन्तसेनामालक्ष्य चारुदत्तो वर्धमानकं चेटमाहूय–'भद्र, प्रबुद्धायां वसन्तसेनायां प्रवहणमारोप्य पुष्पकरण्डकोद्यानमुपनय, अहमपि तत्रैव गमिष्यामि' इत्यादिश्य प्रययौ। तत्रोद्याने च मैत्रेयेण सह सुचिरं सल्लपन् चारुदत्तो वसन्तसेनागमनं प्रतीक्ष्यमाणस्तस्थौ। अथ कतिपयमुहूर्तापगमे वर्धमानकेन प्रतोद्यमानं प्रवहणं दूरादेव दृष्ट्वा 'अये वसन्तसेनाऽऽगता' इति चारुदत्तः सरभसमुत्थाय प्रत्युज्जगाम। अन्तिकं गत्वा तस्मिन् प्रवहणे कुत्रचित् कोणे निलीनं निगडबद्धैकचरणं खड्गहस्तं च पुरुषमेकमपश्यत्। दृष्ट्वा च विस्मयखेदाभ्यामाविष्टहृदयश्चारुदत्तः 'अये, कथं वसन्तसेना नानीता, कोऽसौ पुरुषः' इति वर्धमानकं पप्रच्छ। स त्वेवमब्रवीत्—

"आर्य, यथानिदेशम् आर्यायां प्रबुद्धायां प्रवहणमानीय 'आर्ये सज्जं प्रवहणम्, अधिरुह्यताम्' इति व्यज्ञापयम्। सा तु 'भद्र वर्धमानक, प्रतीक्षस्व क्षणं यावदात्मानं प्रसाधयामि' इत्युक्त्वान्तरयासीत्। अहं तु यानास्तरणस्य विस्मृतत्वात् तदानयनाय प्रवहणेनैव गत्वा लब्ध्वागच्छामीति अनिर्दिश्यैव तस्या बहिरगमम्। यानास्तरणमादायागतः पुनरपि 'आर्ये सज्जं प्रवहणम्, अधिरुह्यतां आर्यचारुदत्तसकाशं गन्तुं' इति व्यजिज्ञपम्। तत्समनन्तरमेव नूपुरशब्दं श्रुत्वा प्रवहणं च भाराक्रान्तं विज्ञाय, आर्यैवारूढेति कृत्वा प्रस्थिषि। मध्येमार्गं राजपुरुषा अपि प्रवहणान्तः परीक्ष्य वसन्तसेनैवारूढेति शशंसुः। तदिदमाश्चर्यं पश्यामि। कुत्र गताऽऽर्या, को वाऽयं पुरुषः, कदा वाऽऽरूढ इत्यत्र न किञ्चिदपि जानामि" इति।

5

स तु पुरुषः प्रवहणस्थ एव चारुदत्तं प्रणम्य– 'आर्य, पाहि मां शरणागतम्' इति साञ्जलिबन्धमभ्यर्थितवान् । 'कस्त्वम्, कुत आगतोऽसि कुतः परित्रातव्यः' इति पृष्टः स साशङ्कमितस्ततो दत्तदृष्टिरेवं बभाषे—

"आर्य श्रूयताम् । अहं गोपालदारक आर्यको नाम । कतिपयदिवसेभ्यः पूर्वं कोऽपि सिद्धः समागत्य मां दृष्ट्वा 'अचिरेणायमुज्जयिन्यां राजा भविष्यति' इत्यादिदेश । तदाकर्ण्य राजा पालको मां बन्धने निक्षिप्तवान् । मम मित्रस्य कर्णीसुतविद्यायां परमं नैपुण्यमावहतः शर्विलकस्य साहाय्येन बन्धनागारं भित्त्वा चरणलग्नं निगडमाच्छिद्यारक्षकान् व्यापाद्य चापक्रम्य प्रधावन् यदृच्छया भवत्सदनस्य पक्षद्वारसमीपमगमम् । तत्र च प्रस्थानाय सज्जीकृतं प्रवहणमिदं दृष्ट्वा कस्येदं स्यादिति चिन्तयति मयि प्रवहणवाहकोऽयं 'आर्ये सज्जं प्रवहणम्, अधिरुह्यतां आर्यचारुदत्तसकाशं गन्तुम्' इत्युच्चैराजुहाव । तच्छ्रुत्वा भवतः प्रवहणमिति मत्वा भवतो दर्शनमेव ममाखिलमभद्रं निवारयिष्यतीति निश्चित्य तेनाविज्ञातमेव प्रवहणमारुरोह । तदानीं ममापक्रमणेन नगर्यां महान् कोलाहलः सञ्जातः । मदन्वेषणाय प्रसृतौ चन्दनको वीरक इति द्वौ नगररक्षाधिकृतौ प्रचलन्तं प्रवहणमिदमपश्यताम् । अपृच्छतां च– 'भोः, कस्येदं प्रवहणम्, को वाऽऽरूढः, कुत्र गच्छति' इति । प्रवहणवाहकोऽयम्– 'आर्य, चारुदत्तस्येदं प्रवहणम्, वसन्तसेनाऽऽरूढा, पुष्पकरण्डकोद्यानं गच्छति' इति प्रत्युवाच । अथाऽपि स्वदृष्ट्या परीक्षितव्यमिति व्यवस्यतोस्तयोर्मम दैवानुकूल्येन मे परममित्रं चन्दनको प्रवहणमधिरुरोह । तं दृष्ट्वाऽहं 'वयस्य शरणागतोऽस्मि' इति तस्य पादावग्रहीषम् । स तु 'अभयं शरणागतस्य' इत्युक्त्वा झटित्यवरुह्य 'हे वीरक, सत्यं प्रवहणवाहको वदति । वसन्तसेनैवारूढा । गच्छतु प्रवहणम्' इत्युवाच । अथ वीरकेऽपि स्वयं द्रष्टुमुद्युक्ते चन्दनकः– 'अरे कथं मय्यप्रत्ययस्ते' इति निर्भर्त्स्य तमाकृष्याऽपसारयामास । बलात् प्रवहणमरोढुमिच्छन् वीरकश्चन्दनकेन पातितः पादेन

ताडितश्च श्वसन्– 'अरे चन्दनक, एहि कार्यालयम्, अधिकरणस्थाने व्यवहारं दास्यामि' इत्युक्त्वा प्रययौ । चन्दनकश्च मामुद्दिश्य खड्गमिमं दत्त्वा– 'गच्छ यथेष्टम्, अहमपि शर्विलकप्रभृतिभिः समं समये साहाय्यमाचरिष्यामि' इत्युक्त्वा यथागतमगच्छत् । तत् क्षम्यतामननुज्ञातं प्रवहणाधिरोहणम् " इति । चारुदत्तो गोपालदारकस्य चरणान्निगडमपनीय 'सखे, न भेतव्यम् । जीवितप्रदानेनापि शरणागतः संरक्षणीयो मया । यादृच्छिकेनापि प्रत्यग्रमैत्रीलाभेन महान् प्रमोदः । तद्यानितो गत्वा दुःखिनं बन्धुवर्गमानन्दयतु' इत्युक्त्वा तं विससर्ज ।

अथ वसन्तसेनाया अदर्शनेन भृशं दूयमानमानसः सव्येक्षणस्फुरणेन मनस्याहितशङ्को मैत्रेयेण सह स्वगृहमयासीत् तत्र च सौवर्णैराभरणैरापूरितया मृच्छकटिकया क्रीडन्तं स्वपुत्रं रोहसेनं वीक्ष्य रदनिकां गृहदासीमाहूय 'कुत इमान्याभरणानि समासादितानि' इति पप्रच्छ । सैवमब्रवीत्– 'आर्य, अनन्तरगृहदारकः सौवर्णमेकं शकटमानीयानेन सह क्रीडितवान् । अनपगतकुतूहल एवास्मिन् स बालस्तच्छकटमादाय स्वगृहं जगाम । अथाहं मृन्मयमेकं शकटं निर्माय दत्तवती । तेनायमपरितुष्टः 'सौवर्णमेव शकटं देहि' इति रुरोद । तदानीं सुप्तप्रबुद्धा, पुष्पकरण्डकोद्यानं गन्तुमात्मानं प्रसाधयन्ती वसन्तसेना 'किं निमित्तमयं रोदिति' इति पप्रच्छ । 'गृहस्य दशावैषम्यमजानन् बालकोऽयं सौवर्णं शकटं याचते' इति मयोक्ते सा सद्य एव भूषणानि स्वगात्रादपनीय मृच्छकटं पूरयित्वा 'भद्र, अनेन कारय सुवर्णशकटम्' इत्युक्त्वा प्रददौ । अथ च प्रवहणमारुह्यार्यस्य सकाशं गन्तुं प्रस्थिता" इति । तच्छ्रुत्वा चारुदत्तः 'रदनिके न गृहीतव्यान्याभरणानि, किं तु प्रत्यर्पणीयानि' इत्युक्त्वा मैत्रेयमेवमाबभाषे– 'सखे, न शुध्यति मेऽन्तरात्मा । अत्याहितं वसन्तसेनायाः शङ्कते । तद्गच्छ भूषणान्यमूनि गृहीत्वा तस्या गृहम् । तद्वृत्तान्तं विज्ञाय भूषणानि प्रत्यर्प्य शीघ्रमागच्छ' इति । तथेति मैत्रेयः प्रययौ ।

अथैकान्ते समुपविष्टं चारुदत्तमधिकरणस्थानाद् दूत आगत्य 'आर्य अधिकरणिकस्त्वां द्रष्टुमिच्छति' इत्याजुहाव । किमिदमुपक्षिप्यते दैवेनेति शङ्काकलङ्कितमानसश्चारुदत्तो दूतेन सहाधिकरणस्थानमगमत् । गत्वा तत्र निर्दिष्टे आसने उपविवेश । अथाधिकरणिकश्चारुदत्तमेवमब्रवीत्– "आर्य चारुदत्त, अद्य राजश्यालेन संस्थानकेन व्यवहारो दत्तः यथा वा पुष्पकरण्डकोद्याने सञ्चरता मया स्त्रीशरीरमेकं निपतितं दृष्टम् । समीपं गत्वा निरीक्षिते सा बहुभूषणभूषिता वसन्तसेना नाम गणिका भूषणजातलुब्धेन केनापि बाहुपाशबलात्कारेण व्यापादितेति निरलङ्काराभरणस्थानैः रुच्छूनया ग्रीवालिकया च तर्क्यते' इति । वसन्तसेना-मातरमाहूय पृष्टे सा 'यौवनसुखमनुभवितुं वसन्तसेना चारुदत्तस्य गेहं गता' इति प्रत्यबोचत् । तदयं व्यवहारो भवन्तमवलम्बते । किमुत्तरं दीयते" इति । तदाकर्ण्य चारुदत्तोऽशनिहत इव विसंज्ञो भूमौ पपात । अथ कथञ्चिल्लब्धसंज्ञं तमधिकरणिक एवमुवाच– 'आर्य चारुदत्त, किं कुर्मो वयम् । व्यवहारस्त्वां पृच्छति । धैर्यमवलम्ब्योत्तरं दीयताम्' इति । चारुदत्त एवमब्रवीत्– 'यद्वृद्धा वदति चारुदत्तगृहं गतेति तत्तथ्यमेव । किं तु पूर्वेद्युर्मम गृहे उषित्वाद्य प्रातः स्वगृहं गतेति जाने' इति । अधिकरणकः पप्रच्छ– 'अथ गच्छन्ती सा केनानु-गता किं पद्भ्यां गता उत प्रवहणेन' इति । एवं पृष्टश्चारुदत्तः– 'मम प्रत्यक्षं न गता । तन्न जाने विवरीतुम्' इत्यवोचत् ।

तत्रान्तरे वीरकः सामर्षः सरभसमागत्य– 'भो अधिकरणिक, अहं कार्यार्थी । श्रूयतां मम व्यवहारः' इत्यवोचत् । अधिकरणिकेन 'कस्ते व्यवहारः' इति पृष्टः स एवमाह– 'बन्धनागारं भित्त्वा पलायितं गोपालदारकमन्वेष्टुमादिष्टोऽहं चन्दनकेन सहागच्छम् । तदापवारितं प्रवहणमेकमपश्यम् । चन्दनकस्तु तदन्तर्वीक्ष्य 'वसन्त-सेनाऽऽरूढा, पुष्पकरण्डकोद्यानं गच्छति, को दोषः, गच्छतु' इत्युवाच । 'अथ मयापि तदवलोकितव्यमिति वदन्तं मां चन्दनकः केशेष्वाकृष्य बहुशः पादेन

ताडयामास । श्रुत्वार्याः प्रमाणम्'' इति । तदेतदाकर्ण्य चारुदत्तः 'शरणागतस्य गोपालदारकस्याभयं प्रतिज्ञातं, तद्वृत्तप्रकाशनं च ममानर्थान्तरमुत्पादयिष्यति' इति कृत्वा तूष्णीमभूत् । अथाधिकरणिकः 'हे वीरक, पश्चाद्भवतो व्यवहारं द्रक्ष्यामः । य एषोऽधिकरणद्वारि अश्वस्तिष्ठति त्वमेनमारुह्य पुष्पकरण्डकोद्यानं गत्वा दृश्यताम् अस्ति काचिद्विपन्ना स्त्री न वेति' इत्यादिदेश । स तु गत्वागत्य 'दृष्टं मया स्त्रीकलेवरमेकं पतितम्' इत्युवाच ।

तस्मिन् समये वसन्तसेनासकाशं प्रेषितो मैत्रेयो मध्येमार्गं 'चारुदत्तोऽधिकरणिकेनाहूतः, अधिकरणस्थानं गच्छति' इति श्रुत्वा साशङ्कोऽभूत् । 'पश्चात् वसन्तसेनासकाशं गमिष्यामि' इति निश्चित्य मैत्रेयोऽधिकरणस्थानमाजगाम । संस्थानकस्तु मैत्रेयहस्ते आभरणजातं दृष्ट्वा 'इदं तदाभरणम्, यत्कृते वसन्तसेना व्यापादिता' इत्यधिकरणिकाय प्रदर्शयामास । नियतिवैषम्यात्सर्वमपि चारुदत्तवाक्यमविश्वसनीयं सञ्जातम् । एवं संस्थानककृतस्य व्यवहारस्य सुश्लिष्टतया निरपराधश्चारुदत्तो वधेन दण्ड्यो बभूव । नगरे च 'चारुदत्तेनार्थनिमित्तं वसन्तसेना व्यापादिता । तदयं वधेन दण्ड्यते' इति घोषणा चाकारि ।

श्रुत्वा च श्रवणकठोराक्षरां घोषणां कश्चित् पुरुषः सरभसमेकचरणलग्नं निगडमाकर्षन्नागत्यैवं बभाषे– ''अहं तावद्राजश्यालस्य संस्थानकस्य प्रवहणवाहकः स्थावरको नाम । अनेन राजश्यालहतकेन हि 'प्रवहणमादाय पुष्पकरण्डकोद्यानमागच्छ' इत्यादिष्टवान् । तथा प्रवहणमादाय गच्छन् मार्गस्य ग्रामशकटरुद्धत्वमपश्यम् । तदा आर्यचारुदत्तगृहस्य पक्षद्वारसमीपे प्रवहणं संस्थाप्य शकटोत्सारणायावरुह्य चापगच्छम् । तत्रान्तरे आर्या वसन्तसेना आर्यचारुदत्तस्य प्रवहणमिति मत्वा ममाविज्ञातमेव पृष्ठत आरुरोह । आरूढां तामजानन् मृत्पिण्डबुद्धिरहं तत्प्रवहणं प्रतोद्यास्य पापिष्ठस्य सकाशं नीतवान् । एवं प्राप्यार्या वसन्तसेना तस्य

हस्तगता बभूव । सा चेमं नृशंसं संस्थानकहतकं, प्रवहणविपर्ययेणारूढाऽहं परित्रातव्या इति पुनःपुनः साञ्जलिबन्धमभ्यर्थितवती । नृशंसोऽयं मामावदत् 'स्थावरक, दुर्ललितेयम्, पुनःपुनरनुबध्यमानोऽपि न मां कामयते । तं दरिद्रं चारुदत्तमेवानुरज्यति । तदिमां मारय' इति । 'नाहमकार्यं करिष्यामि' इति मया प्रत्युक्तम् । ततः स्वयमेवायं राजश्यालः सरभसमुपसृत्य 'हा मातः, हा आर्य चारुदत्त' इति क्रन्दन्तीं तां बाहुपाशेन गले निबध्य पातयामास । अथेदं कर्म मया प्रकाशितं भविष्यतीति कृत्वा मां निगडबद्धचरणं प्रासादे निक्षिप्तवान् । इदानीं नगरघोषणया व्यवहारमन्यथाभूतं विज्ञाय सन्तापसञ्जातवेगः स्वयमेव निगडमाच्छिद्य इहाभ्यपतम्" इति ।

उपरते स्थावरकवाक्ये कश्चिच्छ्रमणकः वसन्तसेनया सह ससम्भ्रममाजगाम। तं दृष्ट्वा 'अये वसन्तसेना जीवति' इति महान् कलकलः सञ्जातः । 'कस्त्वम्, कुत इयं समासादिता' इति पृष्टः स श्रमणक एवमाबभाषे—

"अहमार्यचारुदत्तस्य पादसंवाहनपरः संवाहको नाम । उपरतविभवे चारुदत्ते मन्दभाग्योऽहं द्यूतोपजीवी समभवम् । एकदा द्यूते पराजितो दशसुवर्णस्य कृते निर्बद्धोऽभूवम् । तदर्थं माथुरेण सभिकेन ताड्यमाने मयि दर्दुरको नाम मम बाल्यमित्रं तत्र समागतः । स च माथुरेण सह शुष्ककलहमाचरन् ममापक्रमितुं संज्ञां दत्तवान् । अहं तु सत्वरमपक्रम्य प्रधावन्नपावृतपक्षद्वारमस्या वसन्तसेनाया गेहमनुप्राविशम् । इमामुपसृत्य 'आर्ये परित्रायस्व माम्' इति पादयोरपतम् । इयं तु मद्वृत्तान्तमाकर्ण्य चारुदत्तस्य सेवक इति मत्वा द्विगुणितादरा मामुपाचरत् । स्वहस्ताच्च कटकमेकमपनीय चेटीहस्ते दत्त्वा 'गच्छैतेनेमं ऋणान्मोचय' इति तां प्रेषयामास । चेटी माथुराय कटकं दत्त्वा मां ऋणादमोचयत् । अनेन प्रसङ्गेन सञ्जातवैराग्यः श्रमणकवेषं पर्यग्रहीषम् । अथैकदा सञ्चरन् पुष्पकरण्डकोद्याने राज

श्यालेन संस्थानकेन दृष्टोऽस्मि । कदर्थीकृतश्च तेन निष्कारणवैरिणा । तदा कृपालुना केनापि पुरुषेण मोचितो वापीसमीपमगमम् । तत्र च चीवरखण्डं प्रक्षाल्योत्तीर्थ किञ्चिद्दूरं गच्छन् कस्मिंश्चित् शुष्कपर्णपुञ्जे नवपल्लवमिव स्त्रिया हस्तमेकमलक्ष्यम् । अन्तिकं गत्वा शुष्कपर्णैरावृतशरीरां मृतप्रायामिमां वसन्तसेनामपश्यम् । सा च कथञ्चिल्लब्धसंज्ञा वक्तुमशक्यतया हस्तसंज्ञया पानीयमाचकाङ्क्ष । अथ सरभसं पानीयमानीय दत्त्वा पटान्तेनावीजयम् । मन्दं मन्दमुन्मीलितनयनां तां 'किमिदम्' इत्यपृच्छम् । सा तु उच्छूनग्रीवतया गद्गदेन स्वरेण एवमुवाच–

'श्रमणक, वेशवाटजन्मनः फलमिदम् । किमनेन श्रुतेन । अथापि श्रूयताम् । पुष्पकरण्डकोद्यानस्थितं तमार्यचारुदत्तमुपगन्तुं व्यवसिताहं मन्दभाग्या प्रवहणविपर्ययेण राजश्यालस्य प्रवहणमध्यरुक्षम् । तेन दुर्वृत्तेन, पुनः पुनरनुनीतापि न मां कामयसे इत्युक्त्वा एतामवस्थां प्रापितास्मि' इति । अथेमां विहारमानीय परिव्राजिकाभिः कृतेनोपचारेण यावत् किञ्चित् स्वास्थ्यमापन्नामालक्षयम्, तावदेव चारुदत्तो वध्यस्थानं नीयते इति श्रुत्वा सरभसमनया सहागतोऽस्मि" इति

एतत्सर्वं श्रुत्वा अधिकरणिकः सेवकानाहूय 'मुच्यतां निर्दोषश्चारुदत्तः, संस्थानकश्च पापात्मा शूलमारोप्य वध्यताम्' इत्याज्ञापयामास ।

अत्रान्तरे शर्विलको हर्षोत्फुल्लनयनः सरभसमागत्य चारुदत्तमेवमुवाच– "आर्य, चन्दनकप्रभृतिभिः सहायैरनुगत आर्यको रन्ध्रान्वेषी दुरात्मानं पालकं निहत्य यथासिद्धादेशं राजा बभूव । तेन हि सन्देशं दत्त्वा भवत्समीपं प्रेषितो यथा– 'पुराहमननुज्ञातमेव भवदीयं प्रवहणमारूढो भवता संरक्षितः । इदानीं भवदनुग्रहेण राज्यमिदमासादितं मया । तदिदं राज्यं सर्वमात्मीयं मत्वा यथेष्टमुपयुज्यताम्' इति ।"

तच्छ्रुत्वा परमानन्दभरितश्चारुदत्तः 'तर्हि सद्य एवाचिराधिष्ठितराज्यो राजा द्रष्टव्यः' इत्युक्त्वा प्रचचाल । तदानीं राजसेवकैरधिष्ठितः, पश्चाद्बाहुबद्धो वधस्थानं नीयमानः संस्थानकश्चारुदत्तमभिवीक्ष्य, 'आर्य परित्रायस्व माम्' इति तस्य पादयोः पपात । चारुदत्तश्च 'सखे शर्विलक, मुच्यतामयमसमीक्ष्यकारी' इति नियुज्य आर्यकेण राज्ञा संगतः । तेन बलवता उपचारेणाभिनन्दितः, वधूशब्दालंकृतया वसन्तसेनया पुत्ररोहसेनाभ्यां च संगतः पुनर्महत्या सम्पदा च समुज्जृम्भितः चिरं सुखमन्वभूत् ।



# ४. मानसिंह-कमलकुमारीकथा ।

शारद ऋतुः । मङ्गलतरः कृष्णेतरः पक्षः । व्यतीतः प्रथमयामात्मको निशायाः समयः । प्रसन्नानि दिगन्तरालानि । विकसितप्रसूनपरिमलवाही वाति मन्दं मन्दं शीतलो मलयजो मारुतः । अच्छतमे नीलवर्णभासुरे नभःकेलिमन्दिरे विहरति भगवान् पीयूषभानुरात्मनः पीयूषमयैः करैर्जगच्चक्रमानन्दयँस्तारादारैः साकं स्वैरम् । नृत्यन्ति स्वच्छतराम्भसि सरसि सानन्दं कुमुदानि विकसितानि । आप्रभातस्य च सायं कृषिकर्मपरिश्रान्ताः कृषीवलाः कम्बलवृत्तगात्रा वशीकृता निद्राङ्गनया गाढम् । वनचराः स्वां स्वां दरीं आश्रित्य स्वैराचारपरिश्रान्ताः प्रसुप्ता अनुभवन्ति विश्रान्तिसुखम् । पतत्रिणोऽपि निजेषु नीडेषु निजशावकैः साकं सुखमासेवन्ते निःशब्दं निद्रानन्दम् । आदर्शतलामलसलिलाः स्रोतस्वन्त्यः शनैः शनैः प्रवहता समीरेण समुत्थितैश्चलद्भिस्तरङ्गपोतैर्मधुरतरं निनादं कुर्वन्त्यः प्रवहन्ति ।

किं बहुनां, अखिलमप्येतत् भगवतो मायामयं ब्रह्माण्डमण्डलमुच्चैस्तरं शान्तिसाम्राज्य-सिंहासनारूढमिव भासते स्म।

प्रशान्तबहुलेऽस्मिन् समये तरुणिम्ना समाक्रान्तसकलावयवः कोऽपि रजपूत-वीरो गगनङ्कषानेकशाखाशिखरैर्महीरुहैर्निरन्ध्रिते गिरितरङ्गिणीरुचन्त्याः परिसरे मन्दमारुतान्दोलितांस्तरङ्गान् सकौतुकं क्षणं वीक्षमाणः क्षणं किमप्यन्वेषयन्निव सञ्चरति स्म। कृतवीरभटाकल्पस्य तस्य सुन्दरतरं भासुरं वदनारविन्दमपृष्टमपि कथयति स्म तदीयमनितरसुलभं पौरुषम्, जगद्विस्मयावहां मतिमत्तां च। इतस्ततः पर्यटन् स रजपूतयुवा कमपि पुमांसं गाढं परिरभ्य विस्मृतस्वपरभावां मनागिव परित्यक्तबालभावां कामपि कमनीयतमां कामिनीमपश्यत्। एतद्विलोकनसमकालमेव मतिमतोऽपि तस्य हृदयं प्रतिपत्तिशून्यं संवृत्तम्। पादौ स्तम्भ इव कुण्ठितावभूताम्। चेतनापरित्यक्तमिवासीद्गात्रम्। क्षणेन च ततः सर्वं तद्वपुः क्रुधा सन्तप्तं सकम्पं च। निःसृता रदनसन्दष्टाधरादसृक्। प्रादुर्भूताश्च नयनाभ्यां क्रोधस्फुलिङ्गकणाः। कटौ लम्बमानात्कोशात् सरभसं निशिततरं खड्गं समाकृष्य करेण क्षणं विचिन्त्य पुनःकोशे तं निवेश्य स तरुणवीरः उच्चैस्तां सुन्दरीम् 'साधु साधु कमलकुमारि, साधु। बाढं त्वमसि योग्या तस्य भूवल्लभस्य स्नुषात्वमभिगन्तुम्, यः पुनरेतदखिलमपि भुवनमण्डलं धवलीकुरुते स्म शरच्चन्द्रचन्द्रिकाचारुतमेन कीर्तिकदम्बेन, यश्च पवित्रतमेऽम्बेरान्वय-सिन्धौ प्रासवान् पीयूषभानुरिव जन्म, यस्य च निदेशं शिरसा मालिकेव धारयति सामन्तचक्रम्' इत्यब्रवीत्।

पाठकमहोदयाः, या किलासीदनेन वचसा तस्याः सुचरितायाः दशा, न तां वर्णयितुमेषा मे लेखनी प्रभवति। सत्यं तत्खलु महोदयाः, यदुदीरयन्ति विचक्षणाः, नूनमन्धीभवन्ति प्रणयपिशाचिकावशीकृतचेतसां स्त्रीपुरुषाणां नयनानीति। न खल्वजानात्सा प्रणयान्धीकृतविलोचना तत्र समागतं तं रजपूतकुलप्रसूतं युवानम्।

तरुणोऽपि नाम नाऽवलोकयदेतं सः, यो हि कमलकुमार्याः मुकुलैकमुलभाभ्यां सुकुमारतराभ्यां वाहुपाशाभ्यां दृढं परिष्वक्तोऽविन्दत मन्देतरमानन्दम्। पाठकवराः, आस्तामेतत् । दीयतामितोऽवधानम् । अग्रे किमासीत्तस्याश्च का सुन्दर्या दशेति लिखत्येषा पापा लेखनी । महाभागाः, निशम्य तानि परुषतमानि भाषितानि कम्पमानगात्रयष्टिः साऽभवत् किंकर्तव्यतामूढहृदया । यदि प्रतिभयं खड्खडिति गर्जन्ती विद्युदवितर्कितं निपतेत्पार्श्वे, अथापि नाम सुकुमारीयमेवं न भूयात्कातरा । तदनु सा स्वबाहुसम्बद्धमुन्मुच्य पुरुषं मनागिव पश्चादपसरन्ती बाष्पाविले नयने कथमपि विस्फार्य भीतभीता विलोकयति स्म । अपश्यच्च सा स्वजीवितेश्वरं मानसिंहनामानं रजपूतवंशप्रदीपं प्रस्फुरत्पावकप्रज्ज्वललोचनयुगलं मूर्तिमन्तं कोपमिव स्थितम् । अपरत्र च सव्रीडं शिरोऽवनमय्य स्थितं कमपि यवनवीरं स्वबाहुपाशमुक्तमद्राक्षीत् । निरीक्षमाणा चैतत् सुचरितकुलकलङ्कायमानं स्वीयमतर्कितेन कृतं कर्म सभयं सम्भ्रान्ता सहसा मोहवशीकृता न्यपतद्भूतले । हा हन्त किं कुर्यात् साऽविज्ञातकुटिलभावाऽबला । पाठकवराः, बाढं भवत्स्वयं प्रतिभयतमः समयः समापतितः ।

प्रायः प्रियवाचकवरेण्यानां हृदयं सर्वथा संशयसमाक्रान्तं भवेत् 'कोऽयं मानसिंहनामा शौर्यराशी रजपूतकुलप्रसूतो युवा; केयं लावण्यनिर्जितमदनसुन्दरी सुन्भ्रूी कमलकुमारी, कश्च कमलकुमार्या गाढमालिङ्गितो यवनयुवा । कथं चैष प्रतिभयतम उपनतः कालः' इति । शृणुत —

अस्ति समस्तभूमण्डलमण्डनायमाने स्वस्तिनिकेतने आर्यावर्तप्रदेशे सर्वाङ्गहृदयङ्गमो अम्बेरनामा विशालतमो विषयः । तत्र च यशःपटलेन विराजितः श्रीमान् सुगृहीतनामधेयः भूपालचूडामणिः यशस्विसिंहो नाम राजा परिपालयति स्म प्रजाः प्रजाः स्वा इव । तस्य च राज्ञो रूपे कुसुमधन्वा, प्रतापे सूर्यः, सङ्गरे धनञ्जयः, वितरणे राधेयः, विद्यासु सुरगुरुः, क्षमायां धरित्री, गम्भीरतायां रत्नाकरः, इन्द्रियनिग्रहे गाङ्गेयः, सकलगुणशेवधिः, सत्यवाक् मानसिंहनामा तनयोऽभवत् ।

स राजनन्दनो, केनापि कारणेन निजपित्रा निर्वासनदण्डेन दण्डितस्य कस्यचिद्रजपूतवीरस्य सकलकलाविशारदां लावण्यवतीं गुणवतीं कमलकुमार्यभिधां कन्यकां कामयते स्म । एतामेव च यवनवीरोऽप्येको प्रायतत स्वायत्तीकर्तुम् । अथैकदा रजपूतकुमारो मानसिंहो विजने कमलकुमार्या साकं महान्तं समयं संमन्त्र्य किमपि सङ्केतस्थानमचिन्तयत् ।

अथ तस्मिन्नेवाहनि व्यतीते सा तरुणी निशीथिन्या आदिमे यामे पूर्वकृतसंकेतमनुसरन्ती गिरितरङ्गिणीनाम्नीं स्रोतस्वतीं गतवती । तत्र बृहत्तरशिलातलमधिष्ठाय तरलतरतरङ्गमाले तरङ्गिणीजले प्रतिबिम्बितस्य निशाकरस्य लीलां विलोकमाना सानन्दमुपाविशत् । करतले तस्यास्तदा व्यराजतार्धविकसितानां नवमल्लिकाकुसुमानां माला । एकदा सा सुन्दरी तरङ्गिण्याश्चलतां तरङ्गाणां मञ्जुलेन निनादेन निजं कोकिलकूजितमधुरं स्वरमेकीकृत्य श्रोतृश्रवणासेचनकं निजजीवितेश्वरगुणगणसूचकं किमपि मधुरतमं गायति स्म पद्यम् । एकदाऽस्मनो गुम्फनपाटवेन ग्रथितां पश्यति स्म नवमालिकामालिकाम् । एकदा च गगनचत्वरे तारकाविलासिनीभिः साकं सविलासं विहरन्तं चन्द्रमसं विलोकयति स्म सतृष्णम् । एकदा च वियत्तलभासुराणि संख्यातिगान्युडूनि गणयित्वा गणयित्वा विफलमनोरथा श्राम्यति स्म । एकदा च शिलातलादुत्थिताभिमुखीनं पन्थानमवेक्षमाणा निराशेव निःश्वस्य तरलहृदयोपविशति स्म तत्रैव शिलातले । एवमबलाजनसहजेन तारल्येन समाक्रान्तं स्वीयं हृदयं कथमति निगृह्य करकमलकलितां तां मालां निपुणं निर्वर्ण्य च न्यदधात् मनागिव मन्दं हसन्ती सा पार्श्वे आत्मनः ।

महता परिश्रमेण निगृहीतमपि नवनीतपेलवं तस्या हृदयं पुनश्च वशीकृतं तरलतया । उत्थाय सा पुनः सांमुखीनमध्वानमालोकयत् । परं नास्या मनोरथ फलित इति तदीयं विच्छायं वदनपुण्डरीकमकथयत् । एवं भग्नमनोरथा सा दीर्घमुष्णं च निःश्वस्य यावदुपविशति तावदश्रूयत कुतोऽपि सवेगमभिपततस्तुरङ्गमस्य

खुरपुटोत्थितः शब्दः । तदात्व एव तस्याः कपोलयोर्मधुरतरं स्मितं चकाशे । सानन्दनिर्भरमुत्थिता सा क्षणं क्षणदावल्लभं विलोकयन्ती पुनः स्वपरिचितं पद्यं मधुरं गातुं प्राक्रमत । वल्लकीनिनादं न्यक्कुर्वता तदीयकण्ठभवेन गीतेनाखिलोऽपि स प्रदेशो गीतमयं इवाभासिष्ट । गानलोलुपा विस्मृतवत्यात्मानमपि सा । तदा तदीयनयनाभ्यामश्रूणि मुक्ताफलानीव न्यपतन् । पुलकिता तस्या गात्रयष्टिः । विकसितं मुखपद्मम् । क्षणं संवृता तस्याश्चित्तवृत्तिर्योगारूढचेतसो योगिन इव । अल्पीयसैव कालेन सन्निकृष्ट एवाभवत् तुरगखुरपुटजः शब्दः । तदा तु सा बालिका सरभसं शिलातलादवतीर्य तुरङ्गमादवतरन्तमेव तं युवानं 'कोऽयं समायातः, किं जीवितसर्वस्वं मे मानसिंह एवायं, आहोस्विदपरः कोऽपि' इति मनसाप्यविचारयन्ती, प्रमोदजलभरपूर्णे नयने निमिल्यैव युवानमालिङ्ग्य तदीयं विशालतमं वक्षः आनन्दाश्रुपूरेणासिञ्चत् । अत्रान्तरे तत्र समागतो गिरितरङ्गिणीपरिसरे सञ्चरमाणो मानसिंह इति विदितमेव वाचकमहाशयानाम् । तर्कितं च तैः स्यात् कमलकुमार्या परिष्वक्तो कुटिलमतिर्यवनवीर इति । स एवायं यवनवीरः । आस्तां तावत् । मोहात्कमलकुमारी प्रतिबुद्धा न वेति पश्यामः ।

अथ व्यपगते कियत्काले मनागिव प्रतिबुद्धा सा सुकुमारी निजाविवेकभवं सहसोपनतमपराधं मनसा विचिन्त्य 'हा हन्त, हतास्मि' इति उच्चैस्तरं क्रन्दन्ती सहसा पुनर्मोहमुपगता । ईदृगवस्थामिमां वीक्ष्य यवनवीरः सातिशयं चेतसि विव्यथे । मनागिव कुपितोऽपि संवृत्तः ।

परं मोहितां समाश्वासयितुं न प्रभवति स्म । प्रज्वलत्कोपानलप्रतप्तस्य मानसिंहस्य प्रतिभयतमं लोहितं वदनम्, अङ्गारसदृशं नयनयुगलं च वीक्ष्य साध्वसेन यवनवीरस्य गात्रयष्टिः कम्पमाना संवृत्ता । विलीना धीरता, संभ्रान्तं चासीद्धृदयम् ।

पाठकवराः, यवनवीरोऽपि नाम न साधारणः पुमान् । निजप्रचण्डभुजदण्डनिर्जितसपत्नमण्डलो वीरपुण्डरीक एवाभवत् । परं पराङ्गनासङ्गसम्भवदोषेण सकलमपि तदीयमजनि विनष्टं धैर्यम् । तत्रैव स्थित्वा एतदवेक्षमाणस्य मानसिंहस्यापि विचित्रासीद्दशा । यां किलामन्यत मानसिंहः प्राणेभ्योऽपि गरीयसीं प्रेयसीं, सैव पुनः कमलकुमारी परं पुमांसमालिलिङ्गेति बाढं दोदूयते स्म । कियान्वा समागतः स्यात्तस्य कोप इति तर्कयन्तु वाचकवरा एव । कोपसमाक्रान्तहृदयो मानसिंहः, साध्वसवशीकृतहृदयो यवनवीरश्चोभावपि परस्परं मूढाविव क्षणं वीक्षमाणावतिष्ठताम् । अवसरेऽस्मिन् तत्रैव महीयसा पादपेन प्रच्छन्नमूर्तयः चत्वारोऽश्वारूढा भटा महता जवेन समागताः । तान् निजान् सहचरान् विलोक्य पुनरात्तधैर्यो यवनवीरः सक्रोधावेशं सगौरवं सस्मितं च मानसिंहमैक्षत । परं मानसिंहो मनागपि साध्वसलवेनाप्यस्पृष्टो यथापूर्वं सदर्पं तं विलोकमान एवासीत् ।

अथ मानसिंहो युद्धसन्नद्धान् तान्मत्वाऽकुतोभयं निशिततमं निजं चन्द्रहासं सरभसं कोशान्निष्काश्य स्वयमप्यायोधनाय सज्जोऽभवत् । यवनवीरोऽपि मानसिंहकरतले सौदामिनीव स्फुरत्प्रभामण्डलं खड्गं विलोक्य सावेगमश्वमारुह्य सहचरैः साकं कोशादात्मनः खड्गं करेणादाय मानसिंहसंमुख आसीत् । एवमेकत्र खड्गमात्रसहायः पदातिर्मानसिंहः, अपरत्र तुरगारूढाः पञ्च सज्जीकृतायुधपाणयो यवनवीरा इति विषमतरम् आयोधनं प्रवृत्तम् । तत्र यवनवीराः, वयं पञ्च, मानसिंहस्त्वेक एव, सम्पराये पुनर्न कथमपि संभवेत्पराजयोऽस्माकम्, निरायासं च जित्वैतं सर्वथा जयलक्ष्मीसनाथा भवेमेति निश्चित्य युयुधिरे ।

मानसिंहस्तु समूलमुन्मूलितमनोरथः सपत्नोऽयं तिष्ठत्यग्रतो मे, कथमपि कृत्वा हन्तव्य एवायं मयेति निश्चित्य परित्यक्तजीविताशो निजाङ्गेभ्यः प्रसृतानपि रक्तबिन्दूनविगणय्यायुध्यत । एवं जीवितं तृणाय मत्वा परस्परं युध्यतां तेषामनल्पो व्यतीतः समयः । तथाऽपि जयपराजयवार्तापि नाम नासीत् । परं पञ्चभिः साकं

युध्यतो मानसिंहस्य बलं शनैः शनैः क्षैण्यमधिगन्तुं प्राक्रमत । ततश्चाचिन्तयच्चेतसि स रजपूतवीरः, एवमेव यद्यहं क्षणमेकं युध्येय नूनं संभवेज्जीवितस्यापायो ध्रुवमिति । पुनश्च मनागिव विचिन्त्य स्खलितं विचित्रतमेन संग्रामपाटवेन स योद्धुमुपाक्रमत । ततो मानसिंहस्यायोधनपाटवं विलोक्य विस्मितास्ते यवनवीरा आलेख्ये लिखिता इव क्षणमासुः । अस्मिन्नेवावसरे स रजपूतवीरः सावेगं समीपवर्तिनमेकं यवनवीरं खड्गेनाताडयत् । तेन विच्छिन्नगात्रः सहसाऽश्वाद्भूमौ निपतितः स प्राणानहासीत् । पुनरन्यं वक्षसि दृढं प्रहृत्य निपात्य च तुरङ्गमादधः गतासुं व्यदधान्मानसिंहः । अथ गतासोर्यवनवीरस्य वाजिनं झटिति समारुह्य द्विगुणितबलोत्साहः स सत्वरमवशिष्टयवनवीराणामुपरि प्राधावयति स्म । खड्गोऽपि नाम तदीयो गगनचत्वरे विद्युदिवाबभास । अन्योन्यखड्गाहतिसंभवाः स्फुलिङ्गा दीपयामासुर्दिगन्तरालानि । ततः परिचितपूर्वो यवनवीरः, सर्वथा रजपूतवीरो न खलु साधारणो वीरः, इतरदुर्लभं हि बलमस्य, नाऽनेन साकं युध्यतामस्माकं मनागपि जयः समागच्छेदिति विचिन्त्य तावुभावपि निजसहचरौ विचित्रनेत्रस्फुरणेन प्रोत्साह्य च ताभ्यां सह युगपदेवोद्यतः प्रहर्तुं मानसिंहम् । परं खड्गपातात्पूर्वमेव यवनवीरस्य सहचरयोरेकस्य मूर्धा, अपरस्य सखड्गो हस्तश्च सहसा भूमौ निपेततुः सममेव । ततः सर्वानपि स्वीयान् सहचरान् यमपुरातिथीभूतान् विलोक्य दूयमानमानसः क्रुधा यवनवीरः परित्यज्य जीविताशां प्राक्रमत योद्धुम् । यावच्चायं मानसिंहं शिरो लक्ष्यीकृत्य प्रहर्तुं खड्गं सावेगमुपरि करोति तावदेवासावतन्द्रं युध्यतो रजपूतवीरस्य खड्गेन ताडितः स खड्गः खणणिति शब्दायमानो लज्जित इव प्राविशत् सहसा गिरितरङ्गिणीजलम् । निरस्त्रस्ततो यवनवीरः सापत्रपं मूर्धानमवनमय्य भूतलनिहितदृष्टिः तूष्णीमतिष्ठत् । तदनु विलोक्यैवंविधं यवनवीरं मानसिंहः सावष्टम्भं— 'अरे दुरात्मन्, गच्छ माऽतःपरमिह तिष्ठ मत्पुरतः, न जातु कुर्वन्ति निरायुधे रिपौ खड्गं रजपूतवीराः' इत्यब्रवीत् ।

एवं निगद्य विरतवचसि मानसिंहे, अश्रूयत सकरुणं विलपन्त्या अबलाया रोदनध्वनिः। मन्दं मन्दं वहतः समीरणस्य शीतलेन च स्पर्शेन परित्यक्तमोहा सा तपस्विनी कमलकुमारी चेतसि– 'अहो कीदृशं मया पापया गर्ह्यतममाचरितं कर्म, अहो मेऽविचारता। हा हन्त परपुरुषसमालिङ्गनम्, अहह मास्तु तस्य स्मरणमपि। किमपराद्धं जीवितेश्वरेण। अखिलमप्येतदविवेकताया: फलं सर्वथा। किमत्र प्रतिपत्तव्यम्। हन्त कथं पुनः परित्यजेत् मद्विषयिणी संशयपिशाचिका सरलहृदयं जीवितेश्वरम्। कथं च विदध्याद् यथापूर्वं मय्यनुरागम्। कथमामन्त्रयेद्वा यथापूर्वं प्रणयरसपरिस्यन्दिना वचसा मामन्तिकम्। हन्त हन्त, महत्खल्वापतितम् अत्याहितम्' इति चिन्ता जागृताऽभवत्। एतत्स्मरणसमकालमेव तस्याः खिन्नं संहननं, हृदयं विदीर्णं, बाष्पाविला दृष्टिः, स्तम्भितश्च कण्ठः। सगद्गदं रुदन्तीं तामुपागत्य मानसिंहः सक्रोधमुच्चैः 'धिक् पापे रजपूतकुलपांसुले' इत्यवदत्। सा सुकुमारी नेत्रे कथमप्युन्मील्य यावद्विलोकयति तावदात्मनः पुरतो जीवितेश्वरो मानसिंहः, पार्श्वयोश्चैकतः परासवश्चत्वारो यवनवीराः, पुनरेकतश्च सलज्जमधोमुखं स्थितो यवनवीरः तस्या नेत्रयोर्गोचरा अभवन्। निपुणं विलोक्य चैतान्, पञ्चभिः साकं प्रयुध्य तत्र विजयशालिनं जीवितेश्वरं मन्वाना सानन्दं तदीयमसृक्पङ्किलं वक्षः सुकुमारतरबाहुलतिकाभ्यां गाढमालिङ्ग्य, आनन्दाश्रुपूरेण क्षालयितुमेषा समीपमुपागात् अकुटिलहृदया। तदात्व एव मानसिंहः सकोपं करयुगेन निष्ठुरं पश्चादपसार्य– 'दुष्टे, रजपूतकुलकलङ्किनि, मा अग्रतः कार्षीः पदम्। पश्चादपसर। आकर्णय शान्तेन चेतसा मद्वचनम्' इत्यवदत्। कठोरतममेतत् प्रियतमस्य वचो निशम्य खिन्नस्वान्ता तरलिताक्षी मौनमालम्ब्य भीतभीता तं व्यलोकयत्। अभूच्च सा तदीयं कोपचण्डं वदनं निरीक्ष्य साध्वसेन भूतलनिहितैकदृष्टिः।

मानसिंहः प्राह– 'दुष्टे, अपि स्मरसि, मे पिताऽम्बेराधिपतिस्ते पितरं निर्वासनदण्डेन दण्डयित्वा किमाज्ञापयामासेति। अस्मदीयासु प्रजासु न

केनापि कस्मिन्नपि क्षुद्रतमेऽपि वा कर्मणि ते पिता व्यवहर्तव्यः, यदि कोऽपि कदाचिद् व्यवहरेत् सोऽवश्यं मरणदण्डेन दण्ड्यते, इत्यासीत्तस्याज्ञा। पर पापे, केवलं गुणनिधिर्भवतीति भवत्याः कृते गुणलुब्धोहं पितुराज्ञाम् उल्लङ्घितवान्। दुराचारे, भवत्कुटिलभावमजानन् महान्तं साहसमकार्षम्। कीदृशं हन्त, आचरितं भवत्यानार्यं कर्म। हा हन्त हन्त नूनं विलोक्य भवत्याः कर्मेदं लाजस्फोटं स्फुटतीव मे हृदयम्। मनसापि नाम जात्वपि भवतीदंविधं कर्म समाचरेदिति नाहमचिन्तयम्। एवंविधं कर्म नीचसुलभं द्रष्टुमेव प्रियं सल्लप्यामन्त्रितवती वा मामिह। अद्य बाढं प्रमुदितमासीन्मे हृदयम्। एवं खलु वक्तव्यं त्वया साकमद्य क्रीडितव्यं चैवं ननु तथेति, एवमादिभिर्मनोराज्यशतैः प्रमुदितो मनोरथभद्रासनसमारूढं मामर्धचन्द्रं दत्त्वाऽधः पातयः। अलमलम्। भवत्या कृतस्यानार्यस्य कर्मणः स्मरणमपि मास्तु। यतस्तत्स्मृतं ननु मे मनसि जनयति हेयभावम्। क ते गुणा गताः। कमलकुमारि, सांप्रतमाचरितं भवत्या। हा हन्त सर्वथाऽहमेव मूढः। यतो वृथा भवतीं निन्दामि। को वात्र दोषो भवत्याः। यस्मिन्नाम वंशे जन्मसहजमनार्यं कर्म तस्मिन् खल्वधिगतं भवत्या जन्म। पापे, अत एव पिता मे शास्ति स्म निर्वासनदण्डं ते पितुः। अनार्यकुलप्रभवया त्वया सार्धं व्यहरन् सर्वदा हतोऽस्मि। गच्छ, मा अतःपरं तिष्ठ मदग्रे' इति।

एवं परुषतमानि करुणालवरहितानि वचांस्युदीरयति मानसिंहे सकलमपि गात्रमकम्पत कमलकुमार्याः कातर्येण। नेत्राभ्यां प्रसृता बाष्पधारा। बाष्पनिबद्धकण्ठादेकमप्यक्षरं बहिरागन्तुं नाऽप्रभवत्। केवलं दूयमानाऽजानन्ती वक्तव्यं मौनमेव शरणं मन्वाना विच्छायमात्मनो मुखमवनमय्य दिङ्मूढेवातिष्ठत्। मनागिव तनूकृतकोपावेगः सावेगं गन्तुमुपाक्रामत् मानसिंहः। कमलकुमार्यपि गच्छन्तं जीवितेश्वरमनुव्रजन्ती शोकावेगं किञ्चिदिव निगृह्य सकरुणं गद्गदेन वचसा, 'नाथ, सर्वथेयं ते दासी निरपराधा। अत्र प्रमाणमेषा भवदर्थं गुम्फिताऽर्धोन्मीलिताम्र'

नवमालिकाप्रसूनानां माला । यद्यपेक्षते जीवितं मे, पृच्छतु नन्वेताम्' इत्यब्रवीत् । अशृण्वन्नेव वाचमेतां यथापूर्वं स मानसिंहः सरभसं प्रारभत गन्तुमेव । एतत्सर्वं विलोकमानस्तत्रैव वर्तमानो यवनवीरः पवित्रतमं मानसिंहे वर्तमानं कमलकुमार्याः प्रणयं वीक्ष्य पश्चात्तापपविनिर्गितचेताः निनिन्दातिमात्रमात्मानम् । उदारहृदयेन रजपूतवीरेणायोधने आत्मनो जीवदानेन द्रवीभूतं यवनवीरस्य हृदयं सौकुमार्यनिधेः कमलकुमार्याः शोचनीयतमां दशां वीक्ष्य प्रकामं द्रवति स्म ।

अथ यवनवीरः सरभसं गच्छन्तं मानसिंहं निरुध्य सगद्गदं 'शौर्यराशे रजपूतकुलनन्दन, शृणु । अस्मत्कुलदैवतं स्मृत्वा सत्यं कथयामि नाल्पमप्यत्र विद्यते हि कमलकुमार्या आगः । न खल्वैक्षत स्वप्नेऽपि सा माम् । अहमेव पुनर्दुरात्मा तदीयसौन्दर्यमोहितः प्रायतं तां वशीकर्तुमनेकवारम् । विदितमासीत् दृढं प्ररूढ परस्परं भवतोः प्रणयमिति । उदारमते, नाहं मनसाप्यचिन्तयं सर्वथा सम्भेदनेन कर्मणा प्राणापाय इति । अथ पुनर्भवन्तावुभावपि निशायाः प्रथमे यामे व्यतीते समागमिष्यत इहेति चारमुखादाकर्ण्य समायातोऽहमिह । तदैषात्र दुश्चरिता भवदनुरागसूचकं पद्यमेकं मधुरमधुरं गायन्ती भवत्पन्थानमेव प्रतिपालयन्त्यासीत् । समागतं मां क्रूरहृदयं वीक्ष्य प्रणयमन्थरशून्यहृदया जीवितेश्वरं भवन्तमेवावगतवती । दोषो ममैव । को वा दोषोऽत्र सरलहृदयायाः कमलकुमार्याः । मा कार्षीस्तस्यां स्वल्पमपि कोपम् । पापस्य वार्तापि नाम न स्पृशति ताम् । निरपराधा हि सा । यथापूर्वमेषा प्रेमपात्रीकरणीया भवता । अवश्यमेषा मदीया भारती भवन्तमनुमन्येत । मा निधाः संशयवर्त्मनि पदम् । एषा निरपराधाऽऽसीदिति कथय, गच्छामि । हुं ब्रूहि' इत्यवदत् ।

अथ मानसिंहो यवनवीरनिगदितां नीचैस्तरां वाचमाकर्ण्य परित्यक्तकोपः परं प्रपेदे विस्मयम् । रजपूतवीरस्य कमलकुमार्यां संसक्तं प्रणयं निर्मलतरमासीत् ।

प्रसन्नतमेन चेतसा मानसिंहस्तं यवनवीरं सानन्दं बहुबहूपकृतं मन्यमानः सानुरागं–'वीर, नूनमेषाऽङ्गीकृता। पूर्वतोऽप्यस्यां ममानुरागोऽधिको निर्मलतरश्च सञ्जातः' इति सादरं समाश्वास्य प्रेषयामास। ततश्च स कमलकुमार्या अन्तिकं समागतः। विस्मितश्चासीत्कर्मणानेन तस्याः। मानसिंहः प्राह– 'अये प्रेयसि, किमेवं तिष्ठसि। आगच्छ गृहं, सुन्दरि। व्रजावः। किमेवं मुग्धेव मालाया एकैकं कुसुमं तरङ्गिणीजले सस्मितं क्षिपन्ती तिष्ठसि। अलमलम्' इति। कमलकुमारी सस्मितं जगाद– 'जीवित तितीर्षामि कुसुमानीवैतानि निम्नगातीरे। इच्छामि च सुचिरमस्मिन् महाह्रद उषितुम्। अपि समागच्छति जीवितेश्वरः। बाधते मामेकाकिनीं भीतिः। नाहमागच्छामि निकेतनम्' इति।

न खल्वेवं कदाचिदप्याग्रहं कृतवती कमलकुमारीति विस्मितो यावद्विकिरति दृष्टिं तावदेव सा तरङ्गिणी प्रवेष्टुम् उद्यताऽऽसीत्। मानसिंहः ससम्भ्रमम्– 'अलं प्रेयसि अलम्। मा कुरु साहसम्। एषोऽहमस्मि ते विधेयः। अपसर सुन्दरि, पश्चादपसर' इति निगदन् तामन्वधावत्। तदा पस्फार तस्या नेत्रयोः किमपि तेजः कपोलयोराबभास स्मितम्। 'अलं मा गच्छत्वग्रे वल्लभः, तत्रैव तिष्ठतु। स्वच्छतमेऽस्मिन् ह्रदे प्रतिबिम्बितानि नक्षत्रकुसुमानि संगुम्फ्य रुचिरतमां स्रजं निर्माय तया भूषयामि प्रियतमस्य कण्ठम्' इति तस्याः स्फुटतमं निःसृतानि वाक्यानि शृण्वत एव मानसिंहस्य कर्णौ प्राविशत् कमलकुमार्या ह्रदप्रवेशशब्दो दुडुम् इति। शब्दश्रवणसमकालमेव दूयमानमानसः सरभसं झम्पां प्रदाय प्रविश्य ह्रदं तां गवेषयन्नलभमानस्तटं समागतः। ततश्चतुर्दिक्षु चक्षुर्निक्षिप्य निपुणं निरीक्षमाणः कुत्रापि तस्या अदर्शनेन संभ्रान्तः प्राविशत्तमेव ह्रदं पुनः। न स ततः प्रत्यागतः पवित्रप्रणयशालिहृदयो रजपूतकुलसिन्धुचन्द्रमाः।

# ५. सुशीलायाः कर्तव्यपरता

सुशीलापि विश्रान्तिशालां गत्वा मदलेखायै आत्मन आगमनं न्यवेदयत् । सापि स्मेरानना मदनस्य वैजयन्तीवानितरसाधारणेन लावण्येनोपेता नवे वयसि वर्तमाना सुशीलां सद्य एवात्मनः सविधमानाय्य–'भद्रे अपि नाम त्वमेव सुशीला । तवाकृतिरेवानुमापयति शीलम् । अपि नामास्य नवप्रसूतस्यार्भकस्योपमातृपदमङ्गीकर्तुं शक्नोषि । त्वया चात्र प्रधानधात्रीपदमधिष्ठन्त्याः सरलाया अन्वर्थनाम्न्याः सहायभूतया भवितव्यम्' इत्यभाणीत् ।

अत्रान्तरे कश्चन जराकवलितावयवः पलितशिरस्को वृद्धो मदलेखासविधमाजगाम । तं दृष्ट्वा सुशीला समुत्थाय, स्वामिन्या अयमाकृत्या पितामहो भवितुमर्हतीति मन्वाना, सगौरवं प्रणाममकरोत् । केयमिति तेन पृष्टा मदलेखा– 'वल्लभ, इयमस्माकम् अर्भकस्योपमातृपदे नियुक्ता । नाम्नेयं सुशीला । अस्या गुणगणानधिकृत्य श्लाघते जनः' इति सप्रणयमवादीत् । सोऽपि– 'यत्त्वया क्रियते तन्मयापि कृतमित्यवेहि' इति वदन् तामात्मनस्तृतीयां भार्यां परिचुम्ब्य कार्यान्तरव्यग्रो बहिरगात् । सुशीला च तादृश्यास्तरुण्या जरठभर्तृलाभं दण्डपातमिवाकलयन्ती भुवि लुठन्तमर्भकमादाय लालयन्ती सस्नेहया सरलया निर्दिष्टे गृहे निवासमकार्षीत् । अथ कतिपयैरेवाहोभिस्तेन प्रभुणा सहपरिवारेण माहिष्मतीमगात् ।

अथ माहिष्मत्यास्तिलकमिव विराजमानं महान्तं कञ्चित्सौधमासाद्य द्वारदेशे शीघ्रयानादवतीर्णौ ससंभ्रमप्रधावितैर्नीराजनहस्तैर्भृत्यजनैः कृतावतरणमङ्गलौ तौ प्रभुदम्पती जयशब्दपुरस्सरमन्तर्नीतौ महान्तं प्रमोदमन्वभूताम् ।

मदलेखया सोदरीवदादृता सरलया प्रधानधात्र्या समभिनन्दितस्वभावा अर्भकमात्मनो वशे निक्षिप्तमुपलालयन्ती सुशीला तस्मिन्महासौधे राजवेश्मनीवात्मनो निवासाय परिक्लृप्तमतिरमणीयं धवलगृहमध्युवास । मिष्टान्नभोजनेन पर्याप्तवेतनेन च किञ्चिदिव सुखिता सुशीला धूमकस्य ज्येष्ठभ्रातुः स्थितिमनुस्मृत्यान्वहमन्वशोचत् । उज्जयिनीतः भास्करेण कनिष्ठभ्रात्राऽसकृत्प्रेषितेभ्यो लेखेभ्य अनुजयोर्मालिनीमानिन्योश्च सुस्थितिमवागच्छत् । मदलेखा चाऽनुदिवसं सुशीलाया निकटमभ्येत्यार्भकं लालयन्ती तस्यां महान्तमात्मनो गौरवातिशयमदर्शयत् ।

एवमतीते मासत्रितये कदाचित्सरलया सह संलपन्ती 'कश्चनातिथिरागतः' इति श्रुत्वा, कोऽसाविति जिज्ञासमाना तेनैव सहार्भकमवलोकयितुमागतां मदलेखामवलोक्य, सोऽयमतिथिर्दुरात्मा नन्दन इति प्रत्यभिज्ञाय वैमनस्यमापन्ना सुशीला दृष्टिमन्यत्रापसारयन्ती अतिष्ठत् । नन्दनस्यापि सुशीलादर्शनेन मनसः क्षोभः अजनि । (पूर्वम् उज्जयिनीसमीपे कृतावासस्य सुमतेर्धनिकस्य गृहे सुशीलायाः धात्रीत्वेन निरतायाः स्थितिम्, तत्र तां बलात्कारेण वशीकर्तुं कृतं स्वीयं विफलप्रयत्नं च स्मरन् क्षणं नन्दनस्तूष्णीमतिष्ठत् )। तयोरुभयोरपि मानसीं वृत्तिमिङ्गितैरवगच्छन्ती मदलेखा 'नन्दन, किमेषा सुशीला भवता यत्रकुत्रापि दृष्टपूर्वा' इत्यप्राक्षीत् । सोऽपि 'न सम्यक् प्रत्यभिजानामि' इति गद्गदाक्षरमब्रवीत् । ततः सा सुशीलामभिवीक्ष्य 'भद्रे, त्वयासावपि नाम यदा कदापि दृष्टपूर्वः' इत्यप्राक्षीत् । साऽपि सद्य एव 'भवति, सुमतेरर्यवर्यस्य निकेतने दृष्टः' इति प्रत्यब्रवीत् । अथ सुशीलाहस्तादर्भकं स्वयमादाय नन्दनायादर्शयत् मदलेखा । सोऽपि तं सस्नेहं मूर्ध्न्युपाघ्रायान्यावपि दारकौ सरलया समानीतौ आत्मनः प्रतिबिम्बमिव स्थितावुपलाल्य मदलेखया सह तस्मात्प्रदेशादुपवनमगमत् ।

अथ व्यायामार्थं दारकद्वयमादायाऽऽगतया सरलया समाहूता सुशीलार्भकं गृहीत्वा तया सह सौधाद्बहिर्निगत्य कस्मिंश्चित् प्रच्छायशीतले तरुमूले निभृतं

निपसाद । दारकौ क्रीडार्थमन्यत्र जग्मतुः । अर्भकश्च फलके शायितो निद्रालीढ-नयनोऽभूत् । एवं निर्मक्षिके कृते सरला सुशीलां दृष्ट्वा 'अस्मत्स्वामिनीं भवतीं चाधिकृत्य रहस्यमेकं वक्ष्यामि । तच्च मन्त्रवद्गोपनीयमित्यभ्यर्थये' इत्यवादीत् ।

तदाकर्ण्य सुशीला 'रहस्यं चेन्न श्रोतुमिच्छामि । महोपकारिण्याः स्वामिन्या यः कोऽपि दोष उद्घाटयते चेन्न श्रोतव्यं प्रणयिभिः सेवकजनैः । अतो विषयान्तर-प्रस्तावेन उपवनरामणीयकदर्शनेनाऽऽत्मानं विनोदयावः' इति प्रत्यभाषीत् । तादृशं वचनमभिनन्दन्ती सरसा 'अयि मुग्धे, अहमपि स्वामिन्यां प्रणयभावशालि । न मां मुखरयति पुरोभागिता । परं तु प्रत्यक्षं यद्दृश्यते तदपलपितुं न पार्यते । दोषाश्च ज्ञातव्या एव । महामणिष्वपि दोषज्ञानपुरस्सरमेव गुणा उद्घाट्यन्ते । अतोऽस्माभिः सेवकजनैः स्वामिन्या दोषा ज्ञातव्या एव । परं तु बहिर्न प्रकाशनीया इत्येव मे मतम्' इत्यवादीत् ।

'तर्हि कथय' इति सुशीलयानुयुक्ता सरला एवमवोचत्– 'सखि, पश्येमौ दारकौ । नन्दनस्य प्रतिबिम्बाविव दृश्येते । तस्मिन्नितरामनुरक्ताऽस्मत्स्वामिनी । सोऽप्यसकृदत्रागत्य कतिचन दिनानि सुखं निवसति । प्रभुरसौ कुबेरदत्तः जरा-जीर्णावयवो मदलेखायाः पितामहो भवितुमर्हति । मदलेखा तु नवे वयसि वर्तमाना कस्यचिद्धनिकस्यात्मजा भूत्वा जानन्त्येवैतं पर्यणैषीदिति श्रूयते । भवती नन्दनेन सुमतिगृहे दृष्टपूर्वेति शृण्वन्त्याः स्वामिन्या मुखे वैवर्ण्यमपि दृष्टं किल' इति ।

तदाकर्ण्य सुशीला 'त्वदुक्तं सत्यमेवेति प्रतिभाति । तरुण्या जरठभर्तृलाभ इत्ययं विधिविहितो महान् दण्डपातः । किं क्रियताम् । सेव्यगुणगणपरिपूर्णाया अस्मत्स्वामिन्या दोषोऽयं प्रबलः । विषयोऽयं कुबेरदत्तेनापि ज्ञातः स्यादेव । वर्षीयसोऽस्य सहधर्मचारिणीपदं मदलेखया स्वयमेवाङ्गीकृतं न कस्यापि निर्बन्धेनेति च ज्ञायते । सर्वथायं न शुभोदर्को भविष्यति' इत्यन्वशोचत् ।

पुनश्च सरला 'त्वयि मदलेखाया आदितः प्रभृति प्रणयातिशयस्य कारणं यथा ज्ञातम् । अस्मत्स्वामिनी धनञ्जयस्य पितृष्वसा । कलिङ्गपट्टणे त्वामधिकृत्य तन्मुखात् सर्वमप्युदन्तं श्रुत्वा, तव परिचितां मकरिकामाहूयाऽप्राक्षीत् । सा हि मत्समक्षमेव शीलवृत्तादिषु त्वत्समाना लोके नान्याऽस्तीत्यधिकमस्तावीत् । अनन्तरमेव त्वमिह नियुक्ता । धनञ्जयस्त्वात्मना त्वामधिकृत्य प्रस्तुतमिति न प्रकाशनीयमिति मदलेखां प्रार्थितवान् । त्वत्कृते अविनीतस्यास्य नन्दनस्य धनञ्जयस्य च द्वन्द्वयुद्धमासीदिति च मदलेखाऽनुमिनोति । धनञ्जयेन नन्दनस्य नाम न निर्दिष्टम् । तथापि सुमतेर्यवर्यस्य गृहे दृष्टपूर्वोऽयमित्यद्यैव त्वन्मुखाच्छ्रुतं स्वामिन्या । दृष्टं च नन्दनस्य मुखे वैवर्ण्यम्' इत्यवोचत् ।

तद्वचनेन धनञ्जयस्यात्मनो निमित्ते अतिभूमिं गतमनुरागमवगच्छन्ती जन्मनः साफल्यं मन्वाना तादृशेनोदाराशयेन गर्भेश्वरेण आत्मनः पाणिग्रहणमसंभाव्यमिति निश्चिन्वाना लज्जावशीकृतमानसा क्षणमधोमुखी तस्थौ । सुशीलाया मनोगतमखिलं ज्ञात्वा सरला विषयान्तरं प्रस्तुत्य तया समीपवनरामणीयकदर्शनेन काञ्चन कालकलामतीत्य सह दारकाभ्यामर्भकेण च सौधं प्राविक्षत् ।

एवं गच्छति काले कदाचिच्छिरोवेदनाभिभूतां सुशीलां दृष्ट्वाऽर्भकं गृहीत्वा, उपवनेषु चरन्ती एकाकिनी सरला कस्मिश्चित्प्रच्छायशीतले शिलाफलकेऽर्भकं शाययित्वा स्वयमपि तस्मिन् सुखमवातिष्ठत ।

तदानीं रन्ध्रान्वेषिणी काचन वृद्धतापसी तामुपसृत्य 'भद्रे, दर्शय ते पाणितलम् । लक्षणैस्तव भाविनीं वार्तामवगत्य वदेयम्' इत्यगादीत् । सरलाऽपि तद्वाक्यं विश्वस्याऽऽत्मनः करतलमादरेण दर्शयामास । रेखासु लक्ष्यं बद्ध्वा क्षणं निध्याय सा तापसी भूताविष्टेव वक्तुमारेभे— 'वत्से, त्वमद्य कस्यचित्प्रभोर्निकेतने प्रधानधात्रीपदमधितिष्ठसि । तवाचिरेण पाणिं ग्रहीष्यते कश्चन धनिकः प्रभुः ।

त्वयि राजपत्नीचिह्नानि दृश्यन्ते । परं द्वौ वरौ त्वत्पाणिग्रहार्थमभिलाषेणाऽऽगमिष्यतः । तत्रान्यतममेव वरिष्यसि' इत्युच्चैरभाणीत् । तद्वाक्यं बहुमन्यमाना यावदितस्ततो दृष्टिं निक्षिपति, तावत्काचन सर्वाङ्गसुन्दरी तापसकन्यका समागत्य वृद्धतापसीं प्रणम्य 'मातः, अस्मदाश्रमे भवत्या आगमनं प्रतीक्षन्ते केचन राजन्यकुमाराः । तदविलम्बेनाऽऽगम्यताम्' इति सविनयं व्यजिज्ञपत् ।

सरला तु गमनोन्मुखीं वृद्धतापसीं निरुध्य 'मातः द्वौ धनिकावागमिष्यत इति किलोक्तं भवत्या । तयोः कतरो मे भर्ता इति कथमहं जानीयाम् । प्रसीद । पूरय मे मनोरथम्' इति प्रार्थयामास । तापसी तु प्रतिनिवर्त्य 'तर्हि कथयेयम् । विशिष्य तस्य नामाऽवगन्तुं न शक्यते । यदि मुहूर्तं चक्षुर्निमील्य मयोत्पादितस्य धूमस्याघ्राणं कुर्यास्तर्हि तस्य वरस्य रूपलक्षणादिकं करतलामलकवद्द्रक्ष्यसि' इति वदन्ती तस्या बलवतीं प्रत्याशामजनयत् । कौतुकाविष्टा सरला आत्मनो भाविनं भर्तारं दिदृक्षमाणा तथत्यङ्गीकृत्य वस्त्रखण्डैरक्षणोर्बन्धनमन्वमंस्त । तापसी तु तस्या अक्षिणी वस्त्रखण्डैर्दृढं निबध्य 'तन्वि, एवमेव स्थित्वा नवग्रहाणामानुकूल्यं प्रार्थयस्व । शुष्ककाष्ठानि अन्तर्मुखज्ञानलतां चानीय यावज्ज्वालयित्वा धूममुत्पादयामि' इत्युक्त्वा तस्मात् प्रदेशादपसरत् । अथ चिरात्तस्या अनागमनेन शङ्किता सरला यावद्वस्त्राण्यपनीय चक्षुरुन्मील्य पश्यति तावद्वृद्धतापसीं तापसकन्यकामर्भकं च नाद्राक्षीत् । एवं प्रतारितामात्मनमवगत्य 'अर्भको मुषितः' इत्युच्चैराक्रन्दत् ।

तदाक्रन्दनं श्रुत्वोद्यानपाला इतरे भृत्याश्च समागत्य, किं किमिति पृच्छन्तो मूर्च्छया भुवि निपतितां सरलामुदकाभ्युक्षणादिभिः सचेतनामकार्षुः । अथ क्रमेण अर्भको मुषित इति ज्ञात्वा सर्वतस्तमन्वेष्टुं भृत्या अधावन् । विदितवृत्तान्ता च मदलेखा सह कुबेरदत्तेनागत्याऽर्भकमदृष्ट्वा शोकावेगेन भूमावपतत् । कुबेरदत्तोऽपि धैर्यमालम्ब्यार्भकस्य वार्तावगमाय चारान्सर्वतः प्राहिणोत् । नगररक्षिणश्च विदित-

वृत्तान्ताः संशयितचारित्रान् चोरवृत्तीन्नरानाकार्य 'तैर्मुषितोऽर्भकः' इति ज्ञात्वा कुबेरदत्तनिकटमेत्य 'नितरामन्विष्टोऽपि न लभ्यते पृथुकः । केनापि भवतः प्रभूतं पारितोषिकमन्विच्छता इदं कृतं स्यात् । अर्भकः सुरक्षित एव भवेत् । विलम्बेन लभ्येत । यो वाऽदर्शनं गतमर्भकमन्विष्यानेष्यति तस्मै पञ्चशतं सुवर्णानि दीयेरन् इति नगरे प्रख्याप्यताम्' इति व्यजिज्ञपन् ।

अस्वस्थापि सुशीला दुःखस्य परां काष्ठामधिरूढा स्वामिनीमन्यांश्च द्रष्टुमपि लज्जमानार्भकमन्वेष्टुं प्रायतत । अर्भको विनाशमापन्न एवेति निश्चित्य मदलेखा कदाचित् सरलाया अतिसरलं स्वभावमुपालभत । कदाचित्सुशीलाया अस्वास्थ्यं दैवदुर्विलसितेन सम्पन्नमित्युच्चैराक्रन्दत् । कदाचित्तस्यार्भकस्य दीर्घायुषमुक्तवतो दैवज्ञान् निनिन्द । नाहारमभ्यनन्दत् । न भूषणपरिग्रहमारचयत् । परिजनैः पुनः पुनराश्वास्यमानापि शोकसागरनिमग्ना भूताविष्टेव शून्यहृदया अनवरतमरोदीत् ।

अर्भकवार्तावगमाय सायमुपवनप्रान्तेषु चरन्ती सुशीला अभिमुखमायान्तम् अर्धोन्मत्तं बाल्यात्प्रभृति स्वपरिचितमद्राक्षीत् । स हि (सहसा तदागमनेन विस्मितायाः) सुशीलाया निकटमुपेत्य 'भद्रे, वत्सरद्वितयमतीतप्रायमप्यविगणयन्ती जननीं पितरं चानुशोचन्ती त्वमद्याप्यशुभसूचकान्यसितानि वस्त्राणि धारयसि । धर्मपरायणायां भवत्यां भक्तिरभ्यधिका मे वर्धते । अद्य किल कालपाशदण्डपाशौ (तव ज्येष्ठभ्रातुः सुहृदौ) इहागतौ । मामपीहानीय कस्मिंश्चिदनार्ये कर्मणि अचोदयताम् । मया तु तत्कर्तुं न पारयामीत्युक्तम् । अर्धोन्मत्तोऽपि विद्याविहीनोऽपि नाहमर्थपरः । एताभ्यां कुबेरदत्तात्प्रभूतं द्रविणं प्रतीक्षमाणाभ्यां तदीयोऽर्भकः काञ्चिद्वृद्धतापसीं द्वारीकृत्याऽचोरि' इत्यवोचत् । तदाकर्ण्यामृतेनेव सिच्यमाना सुशीला 'अङ्ग, तस्यैवार्भकस्योपमाताऽहम् । तदलाभे प्राणानपि परित्यजेयम् । यदि जानासि कुत्रान्तर्हितोऽर्भकः' इति सानुनयं साश्रुकण्ठं चाऽऽबभाषे । स हि

'भद्रे, मा रोदीः, अर्भकं प्रत्यानेतुं प्रयतावहे। तदविगमे मदीयोपाय एवानुष्ठेयः। मया यदुच्यते तत्सर्वं विधिचोदनावदनुष्ठेयम्। दुष्टयोरपि कालपाशदण्डपाशयोरनुपुष्टेन मया तयोर्यथा हिंसा न भवेत्तथैव प्रवर्तितव्यम्। नो चेन्मत्साहाय्यमस्मिन्कर्मणि न भवेत्' इत्यवोचत्। तथापि 'तथा' इत्यङ्गीकृतमासीत्।

अथार्धोन्मत्तः 'तर्हि कानिचित्सुवर्णानि गृहीत्वाऽस्यामेव रजन्यां द्वितीये यामे इदमेव वृक्षमूलमागच्छ। अहमपि अत्र भवत्या आगमनं प्रतिपालयेयम्' इत्युक्त्वा तथा दीयमानं पारितोषिकं माऽस्त्विति निरस्य यथागतमगात्।

ततः सुशीलाऽनशनेन प्रायोपवेशं कुर्वतीमिव स्थितां मदलेखामुपेत्य 'अम्ब अस्यां रजन्यामितः प्रस्थायार्भकवार्तावगमाय नगरे यामद्वितयं मे गूढसञ्चारमनुमन्यस्व' इति व्यजिज्ञपत्। सा तु 'त्वमेकाकिनी तरुणी स्पृहणीयदर्शना च। राजमार्गेषु मद्यपायिनो भुजङ्गादयश्च सञ्चरन्ति। बहुदोषा च शर्वरी। अर्भको मुषितः, नाद्यावधि जीवेत्। तव साहसमस्मिन्विषये न सांप्रतं मन्ये। किमत्र क्रियतां दैवायत्ते वस्तुनि' इति प्रेम्णा प्रत्यवादीत्।

सुशीला तु 'मनोबलेन दैवानुकूल्येन च मया सर्वा अप्यापदो दूरीकर्तुं शक्यन्त एव। अर्भकं विना क्षणमपि प्राणितुं नोत्सहे। अनुमन्यस्व माम्' इति साभिनिवेशं वदन्ती कृच्छ्रान्मदलेखयानुज्ञाता द्वितीये यामे भस्त्रिकायां निक्षिप्तान्यात्मना तावन्तं कालं वेतनत्वेन गृहीतानि सुवर्णानि गृहीत्वा निशीथिन्यां कुबेरदत्त प्रासादाद्बहिर्निरगात्। निर्गत्य च तरुमूलं पूर्वसङ्केतितमुपेत्य सहाऽर्धोन्मत्तेन माहिष्मतीं महानगरीमगाहिष्ट। तेन नीचपुरुषाध्युषितां मलदिग्धामसंस्कृतां वीथीं नीता शर्वगलश्यामशार्वरान्धकारे तमनुयान्ती पृष्ठतो जगाम। सोऽपि कस्यचिन्निकेतनस्य पुरः स्थित्वा कपाटमङ्गुलीभिर्मृदु मृदु शब्दापयामास।

तदनु 'कस्त्वम्' इति गृहान्तः स्थितया वृद्धया पृष्टः, 'भवति, अहमर्धोन्मत्त उज्जयिनीनिवासी' इति प्रत्यब्रवीत् । 'तर्हि, अन्तः प्रविश्यताम्' इत्याभाषितस्तया ईषदुद्घाटितं कपाटमवलम्ब्य सह सुशीलयाऽन्तः प्राविक्षत् । ततः पुनरपि कपाटं पिधायार्गलं दत्त्वा वृद्धा भर्तारमाजुहाव । सोऽप्यागत्य 'अङ्ग, कर्तव्यमखिलं सज्जमेवोपर्यलिन्दके निहितम् । प्रतिश्रुतं द्रविणं दापय' इत्यवदत् । 'अस्तु को दोषः' इत्यर्धोन्मत्तेन दत्तसंज्ञा सुशीला 'इदं गृहाण' इति सुवर्णद्वयं वर्षीयसः पुरुषस्य हस्ते अदात् । तेन नितरां प्रमुदितः 'सर्वमनया क्रियेत' इति वृद्धामचोदयत् । साऽपि सुशीलामर्धोन्मत्तं चोपर्यलिन्दकं नीत्वा कृष्णवर्णया वर्णिकया तयोर्मुखं करतलं चाङ्क्त्वा 'युवयोः स्वाभाविकं रूपमिन्द्रादिभिरप्यद्य ज्ञातुं न शक्यते । गच्छतं स्वकार्यसिद्धये । पुनरागमनपर्यन्तमिहैव प्रतीक्षे' इति वदन्ती वस्त्रान्तराणि परिधातुमदात् । अथार्धोन्मत्तवचनात्तानि वस्त्राणि परिधाय विकृतमात्मनो रूपं दर्पणेऽवलोक्य कालपाशदण्डपाशावनेन वेषेण गच्छन्तीं मामेतं च न कदापि प्रत्यभिज्ञास्यतः' इति निश्चिन्वाना 'एवं करणीयम्' इति कर्णे अर्धोन्मत्तेनोपदिष्टा तस्मान्निकेतनाद्विकृतवेषेण तेन सहान्यत्र गन्तुमुपाक्रमत । तेन च सावधानं वीथ्यन्तरं नीता कस्याश्चन पानशालाया अपावृतं द्वारं प्रविश्य पानशालाधिपेन 'कौ युवाम्' इति पृष्टावभूताम् । सुशीला तु स्वरपरिवर्तनं कृत्वा 'भद्रमुख, आवामद्यैव सिंहलद्वीपादागतौ । अयं मे सोदरो बधिरो मूकश्च । आवयोरिहावश्यमावासो दातव्यः । तदर्थं कलशानि सुवर्णानि दास्यामि । गृहाणेदम् । तव सुहृद्भ्यो मधुपानायेदं मदीयं पारितोषिकमस्मद्देशाचारमनुसृत्य प्रथमप्रवेशसमये मया दीयते' इति ब्रुवाणा सुवर्णद्वयं तस्मा अदात् । सुवर्णेन नितरां प्रीतः पानशालाधिपः 'समीचीना उदारा च भवत्या रीतिः । अत्र प्रत्येकतया आवासो दीयते । यथेष्टं स्थीयताम्' इति व्याहरंस्तावेकत्र वस्तुमन्वयुङ्क्त ।

अत्रान्तरे कालपाशदण्डपाशौ शालां प्रविश्य 'मित्र, अपि तापसी तनयया सहार्भकं मुषितमिहाभिरक्षति । कुबेरदत्तोऽद्य, पञ्चशतं सुवर्णानि दास्याम्यर्भकप्रत्यर्पयित्रे इति डिण्डिमारा नगर्यामाघोषणां कृतवान् । श्वः सहस्रं, परश्वः सहस्रद्वयं, पारितोषिकं ग्रहीतुं शक्यते । तावदिहैवार्भकः संरक्षणीयः' इत्यब्रूताम् । 'एवं चेदेषा विसर्जनीया । त्वरते इयमस्यामेव रजन्यामितो निर्गन्तुम् । तस्यै दातव्यं सुवर्णपञ्चकं दत्त्वा विसर्जनीया' इत्यवोचत् ।

तदाकर्ण्य किञ्चिदिव वैमनस्यमापन्नौ तौ धूर्तौ— 'अन्या काचिदर्भकमिहाभिरक्षितुं नियोक्तव्या । नो चेदस्मत्परिश्रमो विफलो भवेत्' इति तं प्रार्थयामासतुः । सोऽपि 'सिंहलद्वीपादागता काचिदिह वर्तते । तां पृच्छेयम्' इति वदन् विकृतरूपां सुशीलामाकार्य 'अर्भकरक्षणमङ्गीक्रियते चेद्दश सुवर्णानि परिश्रमफलत्वेन दीयेरन्' इत्यवादीत् । साऽपि 'तथा' इत्यङ्गीकृत्य सह सोदरेण तं प्रदेशं नीताऽर्भकं तापसीहस्तादादायोपलालयन्ती तस्थौ । अथ निशीथे तृतीययामावसाने निद्रालीढनयनेषु पानशालाजनेषु बहिःकृतावस्थानेन सोदरेणोद्घाट्यमाने कपाटे, सुशीला सोपानपथेनार्भकं गृहीत्वा बहिर्निर्जगाम । ततस्त्वरया पलायमानौ तौ पूर्वप्रवि निकेतनमासाद्य तत्र जागरूकाया वृद्धाया निकटादात्मनो वस्त्राणि गृहीत्वा, मुखं हस्तौ च प्रक्षाल्य तस्यै पर्याप्तं पारितोषिकं दत्त्वाऽर्धोन्मत्तेन सह चतुर्थे यामे कुबेरदत्तप्रासादमासेदतुः । अर्धोन्मत्तस्तु तया दत्तं पारितोषिकं न जग्राह । 'स्वधर्मानुष्ठानस्य किमर्थं पारितोषिकग्रहणम् । न साधु न साधु' इति वदन् उज्जयिनीमगमत् ।

अर्भकलाभेन नितरामानन्दनिर्भरा मदलेखा सुशीलायाः पादयोरपतत् । हृदये समालिलिङ्ग । चुबुकमुन्नमय्य अचुम्बत्कपोलयोर्मूर्ध्नि च । एतादृशोपकारस्य किं कृत्वाऽनृणी भवेयम् । सुशीले, भवतीं काञ्चन वनितारूपिणीमस्मत्सौभाग्यदेवतां

मन्ये' इत्येतानि चान्यानि च कृतज्ञताबहुमानद्योतकानि वचनानि व्याहार्षीत् । कुबेरदत्तश्च परितुष्टः 'इयं ह्यस्मत्परिजनेष्वेकतमा । तस्यै पञ्च सुवर्णानि पारितोषिक-तया दातव्यानि । अत उपरि किमर्थमेवं तस्या अनर्हं गौरवं दीयते भवत्या' इत्यवोचत् । तद्वचनेन कुपिता मदलेखा 'न तादृशीयं रमणीमणिः । अनभिज्ञोऽसि तस्या गुणगणानाम् । अर्भके औरसे इव महान्तं प्रणयातिशयमावहतीयम् । येनात्मनार्जितं सर्वमपि द्रविणं तदधिगमे प्रीतिदायत्वेनानयान्येभ्यो दत्तं स्यात् । कथमेनां संभावयामि । परिजन इत्यवज्ञा । देवतेत्यतिशयोक्तिः । मानुषीति तद्गुणाज्ञानम् । सोदरीत्ययथार्थता । अर्भकप्रियेति गुणलवकथनम् । सखीति लघूक्तिः । मातेत्यनुभवविरोधः । बहिश्चराः प्राणा इति स्तुतिः । अस्मत्सौभाग्य-देवतेत्यप्रत्ययः । सुशीला इत्येव सर्वात्मना सङ्गच्छते' इति सामिनिवेशमब्रवीत् ।

अरसिकः कुबेरदत्तः 'कुरुष्व यथा ते रोचते' इति स्वव्यापारावलोकनाय बहिः सज्जीकृतं तुरगयानमधिरुह्य निरगात् । सुशीलापि मदलेखाया अतिभूमिं गतं कार्तज्ञ्यं दृष्ट्वा 'स्वामिनि, अनर्हाहमेतादृशस्य प्रेम्णः' इति निवेदयन्ती यथापूर्व-मर्भकावेक्षणाद्यात्मनः कृत्यं निरवहत् ।

* * *

# ಕಠಿನ ಶಬ್ದಾರ್ಥಕೋಶ

## १. विक्रमार्कसिंहासनकथा

(ಪುಟ೧) स्वगुण...विभूतिः—स्वस्याः गुणैः पराभूता पुरन्दरपुरस्य (पुरन्दरस्य पुरः, तस्य) विभूतिः यया सा; पराभूता= ಸೋಲಿಸಲ್ಪಟ್ಟ; पुरन्दरः= ಇಂದ್ರನು; विभूतिः= ಮಹಿಮೆ, ಸಮೃದ್ಧಿ समस्त...युगलः—समस्तानां सामन्तानां सीमन्तिन्यः, तासां सिन्दूरेण अरुणे चरणौ एव कमले, तयोः युगलं यस्य सः; सीमन्तिन्यः= ಸ್ತ್ರೀಯರು; सिन्दूरः= ಕುಂಕುಮ. स्वविक्रम...विक्रमः—स्वस्य विक्रमेण अपहृतः वैरिणां विक्रमः येन सः। चातुर्वर्ण्यम्= ಬ್ರಾಹ್ಮಣ, ಕ್ಷತ್ರಿಯ, ವೈಶ್ಯ ಮತ್ತು ಶೂದ್ರ ಎಂಬ ನಾಲ್ಕು ವರ್ಣಗಳ ಸಮೂಹವನ್ನು, ಅಂದರೆ ಸಮಾಜವನ್ನು. (ಪುಟ೨) आसन्नवार्द्धकः—आसन्नं वार्द्धकं यस्य सः; वार्द्धकं= ಮುಪ್ಪು वसुन्धरा= ಭೂಮಿ दिगम्बरः= ದಿಗಂಬರ ಸಂನ್ಯಾಸಿ हवनम्= ಆಹುತಿ पितृवनम्=ಸ್ಮಶಾನ अष्टमहासिद्धयः— 'अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा। ईशित्वं च वशित्वं च तथा कामावसायिता॥' अनर्गला—अविद्यमाना अर्गला यस्याः सा ಅರ್ಗಲವೆಂದರೆ ಅಗಳಿ; ಅನರ್ಗಳಾ ಎಂದರೆ ಅಬಾಧಿತವಾದದ್ದು अन्तरम्= ತಾರತಮ್ಯವನ್ನು वासवः= ಇಂದ್ರ, भरतविद्या= ನಾಟ್ಯಶಾಸ್ತ್ರ, सुधर्मा=ದೇವಸಭೆ, ಇಂದ್ರನ ಆಸ್ಥಾನ पाकशासनः= ಇಂದ್ರ. (ಪುಟ೩) सालभञ्जिकाः= ಗೊಂಬೆಗಳು, ಮೂರ್ತಿಗಳು आपृच्छ्य= ಅನುಜ್ಞೆಯನ್ನು ಪಡೆದು सार्धद्विहायनायाम्= ಎರಡುವರೆ ವರ್ಷದವಳಲ್ಲಿ दैवज्ञान्= ಜ್ಯೋತಿಷಿಗಳನ್ನು अनुजग्राह= ಅನುಗ್ರಹಿಸಿದನು. (ಪುಟ೪) मध्येसभम्= ಸಭೆಯ ಮಧ್ಯದಲ್ಲಿ यावनालचणकसमृद्धम्= ಗೋಧಿಹುಲ್ಲು ಮತ್ತು ಕಡಲೆಕಾಳಿನಿಂದ ಸಮೃದ್ಧವಾದ. (ಪುಟ೫) ब्राह्मणस्वम्=ಬ್ರಾಹ್ಮಣನ ಸಂಪತ್ತು. परिणतम्=ಪಕ್ವ उर्वारुकफलानि=ಸೌತೆಕಾಯಿಗಳು.

(ಪುಟ೬) चखान= ಅಗಿಯುತ್ತಿದನು पुरुषमात्रे= ಆಳುಮಟ್ಟದ अतिगरिष्ठम्= ಅತ್ಯಂತ ಭಾರವಾದ. (ಪುಟ೭) प्रत्यर्थिभूपालान्= ವೈರಿರಾಜರನ್ನು अवसरः= ಸೂಕ್ತಕಾಲ (ಪುಟ೮) आलेख्यगताम्= ಚಿತ್ರದಲ್ಲಿರುವವಳನ್ನು पद्मिनीलक्षणयुक्ताम्=ಪದ್ಮಿನೀಸ್ತ್ರೀಯ ಲಕ್ಷಣಗಳಿಂದ ಕೂಡಿದ: ಪದ್ಮಿನೀ ಸ್ತ್ರೀ ಅತ್ಯಂತ ಶ್ರೇಷ್ಠ ಜಾತಿಯ ಹೆಣ್ಣು चिह्नम्=ಮಚ್ಚೆ (ಪುಟ೯) भल्लूकः= ಕರಡಿ नृशंसः= ಕ್ರೂರಿ. (ಪುಟ೧೦) अप्रमत्तः= ಎಚ್ಚರಿಕೆಯಾದ दुःस्थः= ಸಂಕಟದಲ್ಲಿರುವವನು क्रव्यादः= ಹಸಿಮಾಂಸವನ್ನು ತಿನ್ನುವ ಪ್ರಾಣಿ. (ಪುಟ೧೧) नकुलबालम्= ಮುಂಗುಸಿ ಮರಿಯನ್ನು असमीक्ष्यकारी= ಪರೀಕ್ಷಿಸದೆ ಕಾರ್ಯಮಾಡುವವನು. (ಪುಟ೧೨) यवनिका= ಪರದೆ. (ಪುಟ೧೩) सद्भावः= ಒಳ್ಳೆಯ ಭಾವನೆ, ವಿಶ್ವಾಸ विदग्धता= ಬುದ್ಧಿವಂತಿಕೆ. (ಪುಟ೧೪) व्याचकर्ष=ಎಳೆದನು पुरन्ध्रीभिः= ಮುತ್ತೈದೆಯರಿಂದ अतिशेतुम्= ಮೀರಿಸುವುದು उद्भावयति= ತೋರಿಸುತ್ತಾನೆ. (ಪುಟ೧೫) नियुतम्= ಶತಸಹಸ್ರ.

## २. वेतालकथा

### (क) यशःकेतु–मृगाङ्कवतीकथा

(ಪುಟ೧೬) शिंशपावृक्षः= ಅಶೋಕವೃಕ್ಷ श्रमविनोदाय= ಶ್ರಮಪರಿಹಾರಕ್ಕಾಗಿ प्रमदास्पदे= ಸ್ತ್ರೀಯರಿಂದ ತುಂಬಿದ बहुच्छिद्रेषु= ಅನೇಕ ನ್ಯೂನತೆಯ ಪ್ರಸಂಗಗಳುಳ್ಳ (ಪುಟ೧೭) अपदेशेन= ನೆಪದಿಂದ अनुजानीहि= ಅನುಮತಿ ನೀಡು प्रतीहारी= ದ್ವಾರಪಾಲಕ अंशुमान्= ಸೂರ್ಯ अतर्कितः= ಸುಳಿವು ತಿಳಿಯಲ್ಪಡದೆ. (ಪುಟ೧೮) अपास्तशयनः–अपास्तं (परित्यक्तं) शयनं (शय्या निद्रा वा) येन सः= ನಿದ್ರೆಯಿಲ್ಲದ प्रवहणम् = ನಾವೆ प्रवालैः= ಚಿಗುರುಗಳಿಂದ, ಹವಳಗಳಿಂದ जाम्बूनदोज्ज्वलैः= ಚಿನ್ನದಂತೆ ಹೊಳೆಯುವ सद्रत्नपर्यङ्कः= ರತ್ನಖಚಿತವಾದ ಮಂಚ उप्त= ನೆಡಲ್ಪಟ್ಟದ್ದು पोतात्= ನಾವೆಯಿಂದ उत्तारितभाण्डेन=ವ್ಯಾಪಾರಸಾಮಗ್ರಿ (ಭಾಂಡ-ಮಾಲು) ಯನ್ನು [illegible] (ಪುಟ೧೯) सत्त्वमात्रसहायः= ಸ್ವಸಾಮರ್ಥ್ಯ (ಧೀಶಕ್ತಿ) ಮಾತ್ರ

ಸಹಾಯವುಳ್ಳವನಾಗಿ, ಅಂದರೆ ಒಬ್ಬನೇ, ಬೇರಾರ ಜೊತೆಯಿಲ್ಲದೆ अङ्गविषय:=ಅಂಗದೇಶ राज्यजीविते–राज्यं जीवितं च । (ಪುಟ೨೦) तापसकल्प:= ತಪಸ್ವಿಯ ವೇಷಧಾರಿ, ತಪಸ್ವಿಯಂತಿರುವವನು यियासुना= ಹೋಗುವ ಇಚ್ಛೆಯುಳ್ಳ (वणिजा) प्रह्व:= ವಿನೀತನಾದವನು वल्लकीवाद्यम्= ವೀಣೆ विप्रलब्ध:= ವಂಚಿಸಲ್ಪಟ್ಟವನು पूर्वभार्या= ಹಿಂದಿನ ಜನ್ಮದಲ್ಲಿ ಹೆಂಡತಿಯಾಗಿದ್ದವಳು. (ಪುಟ೨೧) पेशलै:= ಮೃದುವಾದ समय:= ಕಟ್ಟಳೆ अनायत्ता= ವಿವಶಳಾಗಿ. (ಪುಟ೨೨) प्रतिपद्य= ಒಪ್ಪಿಕೊಂಡು तम:श्यामव्यात्तवक्त्र-बिलम्·तमोवत् श्यामं व्यात्तं वक्त्रम् बिलम् इव यस्य स:, तम्= ಕತ್ತಲೆಯಂತೆ ಕಪ್ಪಾದ ಅಗಲವಾಗಿ ತೆರೆದ ಬಿಲದಂತಹ ಮುಖವುಳ್ಳ निर्मोकमुक्तभुजगश्यामलेन–निर्मोकात् मुक्त: भुजग: तद्वत् श्यामलेन= ಪರೆ ಬಿಟ್ಟ ಸರ್ಪದಂತೆ ಹೊಳೆವ ಕೃಷ್ಣವರ್ಣವುಳ್ಳ (असिना) सन्दष्टोष्ठपुटम्= ಹಲ್ಲುಗಳಿಂದ ಕಡಿಯಲ್ಪಟ್ಟ ಕೆಳದುಟಿಯುಳ್ಳ. (ಪುಟ೨೩) सपरिच्छद:= ಪರಿವಾರ ಮತ್ತು ಸಾಮಗ್ರಿ ಸಮೇತನಾಗಿ. (ಪುಟ೨೪) शुचा= ದುಃಖದಿಂದ.

(ख) शुक–शारिकयोर्विवाद:

(ಪುಟ೨೫) विवादनिष्पत्तये= ವಿವಾದದ ನಿರ್ಣಯಕ್ಕಾಗಿ, ಪರಿಹಾರಕ್ಕಾಗಿ. (ಪುಟ೨೬) श्वाशुरवेश्मनि= ಮಾವನ ಮನೆಯಲ್ಲಿ श्वभ्रे= ಕಂದರದಲ್ಲಿ विक्षताङ्गी= ಗಾಯಗೊಂಡ ದೇಹವುಳ್ಳವಳಾಗಿ कृच्छ्रात्= ಕಷ್ಟದಿಂದ. (ಪುಟ೨೭) श्वाशुरीं–श्वशुरस्य इयं श्वाशुरी, ताम् (समृद्धिम्) विषमसाहसा:= ಅನುಚಿತ ಸಾಹಸವುಳ್ಳವರು नेत्रचकोरामृतरश्मये–नेत्रमेव चकोर:, तस्य अमृतरश्मये (चन्द्राय)= ನಯನವೆಂಬ ಚಕೋರಕ್ಕೆ ತೃಪ್ತಿ ನೀಡುವ ಚಂದ್ರನಾದ. (ಪುಟ೨೮) जह्रे= ಅಪಹರಿಸಲ್ಪಟ್ಟನು मणिम्= ರನ್ನವನ್ನು निभृतम्= ಗುಟ್ಟಾಗಿ परिभूता= ಅಪಮಾನಿತಳಾಗಿ. (ಪುಟ೨೯) सर्वस्वम् अदण्डयत्= ಆಸ್ತಿಯನ್ನು ವಶಪಡಿಸಿಕೊಳ್ಳುವ ಶಿಕ್ಷೆಯನ್ನು ವಿಧಿಸಿದನು.

## ३. चारुदत्तकथा

(ಪುಟ೩೦) देवतोपस्थानार्थम्= ದೇವತೆಯ ಪೂಜೆಗೋಸ್ಕರ. अप्रतीकारम्= ಸರಿಪಡಿಸಿಕೊಳ್ಳುವ ಉಪಾಯವಿಲ್ಲದೆ. (ಪುಟ೩೧) साध्वसकम्पमानगात्री–साध्वसेन

कम्पमानं गात्रं यस्याः सा– साध्वसेन= ಭಯದಿಂದ अभिपत्य= ಸಮೀಪಿಸಿ. राजश्याल= ರಾಜನ ಭಾವಮೈದುನ संस्थानकः= ನಗರದ ಆರಕ್ಷಕಾಧಿಕಾರಿ अनुबध्नन्= ಹಿಂಬಾಲಿಸುತ್ತಾ, वृक्षषण्डः= ವೃಕ್ಷಸಮೂಹ अनाकर्णितकेन= ಕೇಳಿದರೂ ಕೇಳದವನಂತೆ विविक्ते= ನಿರ್ಜನಪ್ರದೇಶದಲ್ಲಿ, ಏಕಾಂತದಲ್ಲಿ कर्णीसुतविद्या= ಕರ್ಣೀಸುತ ಎಂದರೆ ಮೂಲದೇವ, ಚೋರಶಾಸ್ತ್ರದ ಪಿತಾಮಹ; ಕರ್ಣೀಸುತವಿದ್ಯೆ ಎಂದರೆ ಚೋರಶಾಸ್ತ್ರ. (ಪುಟ३३) प्रसाधयामि= ಅಲಂಕರಿಸಿಕೊಳ್ಳುತ್ತೇನೆ यानास्तरणम्= ವಾಹನದ ಗಾದಿ (ಮೆತ್ತನ ಹಾಸಿಗೆ). (ಪುಟ३५) अधिकरणस्थानम्= ನ್ಯಾಯಾಲಯ प्रत्यग्रमैत्रीलाभेन–प्रत्यग्र= ಹೊಸ दूयमानमानसः–दूयमान= ದುಮ್ಮಾನಗೊಂಡ सव्येक्षणम्= ಎಡಗಣ್ಣು. (ಪುಟ३६) अधिकरणिकः= ನ್ಯಾಯಾಧೀಶ. (ಪುಟ३७) सुश्लिष्टतया= ಸುಸಂಬದ್ಧವಾದ್ದರಿಂದ प्रतोद्य= ಹೊಡೆದು ಕೊಂಡು. (ಪುಟ३८) कटकः (कम्)= ಬಳೆಯನ್ನು. (ಪುಟ३९) आचकाङ्क्ष= ಬಯಸಿದಳು व्यवसिता= ಉದ್ಯುಕ್ತೆಳಾಗಿ.

## मानसिंह–कमलकुमारीकथा

(ಪುಟ४०) कृष्णेतरः पक्षः= ಶುಕ್ಲಪಕ್ಷ विकसितप्रसूनपरिमलवाही–विकसितानां प्रसूनानां परिमलं वहति इति–प्रसूनम्= ಹೂವು पीयूषभानुः= ಚಂದ್ರ– पीयूषः (षम्)= ಅಮೃತ भानुः= ಕಿರಣ दरीः= ಗುಹೆಗಳನ್ನು पतत्रिणः= ಹಕ್ಕಿಗಳು शावकैः साकम्= ಮರಿಗಳೊಂದಿಗೆ. (ಪುಟ४१) तरुणिम्ना= ಯೌವನದಿಂದ गगनङ्कषानेकशाखाशिखरैः–गगनं कषन्तीनां अनेकासां शाखानां शिखरैः= ಆಕಾಶವನ್ನು ಉಜ್ಜುತ್ತಿರುವ ಅನೇಕ ಶಾಖೆಗಳ ತುದಿಗಳಿಂದ नीरन्ध्रिते= ದಟ್ಟವಾಗಿರುವ (परिसरे) कृतवीरभटाकल्पस्य–कृतः वीरभटस्य आकल्पः येन सः, तस्य–आकल्पः= ಉಡುಪು कुण्ठितौ= ನಿಶ್ಚೇಷ್ಟಿತ (ನಾದವು) कटौ= ಟೊಂಕದಲ್ಲಿ कोशात्= ಒರೆಯಿಂದ. (ಪುಟ४२) मदनसुन्दरी= ರತಿ स्वस्तिनिकेतने= ಕ್ಷೇಮದ ನೆಲೆಯಾದ वियन्मध्य-हंसः= ಸೂರ್ಯ धनञ्जयः= ಅರ್ಜುನ राधेयः= ಕರ್ಣ रत्नाकरः= ಸಮುದ್ರ गाङ्गेयः= ಭೀಷ್ಮ शेवधिः= ನಿಧಿ. (ಪುಟ४३) निशीथिन्याः= ರಾತ್ರಿಯ स्रोतस्वती=

ನದಿ तारकाविलसिनीभिः—तारकाः एव विलासिन्यः, ताभिः । उडूनि=ನಕ್ಷತ್ರಗಳನ್ನು नवनीतपेलवम्— ಬೆಣ್ಣೆಯಂತೆ ಮೃದುವಾದ सांमुखीनम्— ಎದುರಿನ. (ಪುಟ೪೪) खुरपुटोत्थितः— ಗೊರಸಿನಿಂದ ಉಂಟಾದ चकाशे—ಬೆಳಗಿತು क्षणदावल्लभः—ಕ್ಷಣದಾ-ರಾತ್ರಿ, ವಲ್ಲಭ-ಪತಿ; ಕ್ಷಣದಾವಲ್ಲಭನು ಚಂದ್ರ न्यक्कुर्वता— ತಿರಸ್ಕರಿಸುವ अमासिष्ट— ಭಾಸವಾಯಿತು लोहितम्— ಕೆಂಪಾದ. (ಪುಟ೪೫) पुण्डरीकः— ಹುಲಿ अकुतोभयम्— ಭಯವೆಂಬುದನ್ನೇ ಕಂಡರಿಯದ सौदामिनीव— ಮಿಂಚಿನಂತೆ विषमतरम्— ಅಸಮಾನ सम्पराये— ಯುದ್ಧದಲ್ಲಿ. (ಪುಟ೪೬) यमपुरातिथीभूतान्— ಯಮನಗರದ ಅತಿಥಿಯಾದವರನ್ನು, ಮರಣಹೊಂದಿದವರನ್ನು सापत्रपम्— ಅವಮಾನದಿಂದ. (ಪುಟ೪೭) निगद्य— ಹೇಳಿ समीरणस्य ಗಾಳಿಯ विदध्यात् ನೆಲೆಗೊಳಿಸಿಯಾನು संहननम्— ಶರೀರವು विदीर्णम् ಒಡೆಯಿತು. (ಪುಟ೪೮) लाजस्फोटं· ಅರಳು ಸಿಡಿದಂತೆ (ಕ್ರಿಯಾವಿಶೇಷಣ) साम्प्रतम् आचरितम् ಯುಕ್ತವಾದದ್ದೇ ಮಾಡಲ್ಪಟ್ಟಿತು उदीर-यति (सति) ಹೇಳುತ್ತಿದ್ದಂತೆ. (ಪುಟ೪೯) आगः ದೋಷ प्रायतम् ಪ್ರಯತ್ನಿಸಿದನು मा निधाः— ಇಡಬೇಡ. (ಪುಟ೫೦) मुग्धा इव— ಹುಚ್ಚಿಯಂತೆ आग्रहम्— ಹಠವನು पस्फार— ಹೊಳೆಯಿತು स्रजम्— ಹಾರವನ್ನು.

## ५ सुशीलायाः कर्तव्यपरता

(ಪುಟ೫೧) विश्रान्तिशाला— ವಿಶ್ರಾಂತಿಗೃಹ, ಛತ್ರ वैजयन्ती— ವಿಜಯ ಪತಾಕೆ सविधम्— ಹತ್ತಿರಕ್ಕೆ अनुमापयति— ಸೂಚಿಸುತ್ತದೆ उपमातृपदम्— ಧಾತ್ರಿಯಸ್ಥಾನವನ್ನು पलितशिरस्कः— ನರೆತ ತಲೆಯವನು जरठ— ಮುಪ್ಪಿನ दण्ड-पातम् इव— ಶಿಕ್ಷೆಯಂದು आकलयन्ती— ಭಾವಿಸುವವಳಾಗಿ अर्भकम्—ಮಗುವನ್ನು शीघ्रयानात्— ಕಾರಿನಿಂದ प्रमुदम्पती— ಒಡೆಯ ದಂಪತಿಗಳು; दम्पती— ಪುಲ್ಲಿಂಗ ದ್ವಿವಚನಶಬ್ದ. (ಪುಟ೫೨) परिक्लृप्तम्— ನಿಯಮಿತವಾದ मिष्टान्नम्— ರುಚಿಕರವಾದ ಆಹಾರ पर्याप्तवेतनम्— ಸಾಕಷ್ಟು ವೇತನ (ಸಂಬಳ) अनुजयोः— ತಂಗಿಯರಿಬ್ಬರ प्रत्यभिज्ञाय—ಗುರ್ತಿಸಿ वैमनस्यमापन्ना— ವಿಷಾದಗೊಂಡು इङ्गितैः—ಮುಖಭಾವಗಳಿಂದು

गद्गदाक्षरम्– ನಡುಗುವ ಮಾತಿನಿಂದ उपवनम्– ವಿಹಾರೋದ್ಯಾನ निभृतम्–(ಅವ್ಯಯ) ಏಕಾಂತದಲ್ಲಿ. (ಪುಟ೫೩) निषसाद– ಕುಳಿತಳು फलके– (ಕಲ್ಲು) ಹಾಸಿನಮೇಲೆ निर्मक्षिके कृते– ಯಾರೂ ಇಲ್ಲದಂತಾದಾಗ(ನೊಣವೂ ಇಲ್ಲದಂತಾಗ) मुग्धे– ಅಲೌಕಿಕಳೇ मुखरयति– ಮಾತನಾಡುವಂತೆ ಮಾಡುತ್ತದೆ पुरोभागिता– ದೋಷೋದ್ಘಾಟನ ಬುದ್ಧಿ अपलपितुम्– ಅಲ್ಲಗಳೆಯಲು अनुयुक्ता– ಅನುಮೋದಿಸಲ್ಪಟ್ಟವಳಾಗಿ असकृत्– ಮೇಲಿಂದ ಮೇಲೆ, ಆಗಾಗ್ಗೆ पर्यणैषीत्– ವಿವಾಹವಾದಳು वर्षीयसः–ವಯಸ್ಸಾದವನ शुभोदर्कः– ಒಳ್ಳೆಯಪರಿಣಾಮ. (ಪುಟ೫೪) पितृष्वसा– ಸೋದರತ್ತೆ प्रस्तुतम्–ಪಂಚಯಿಸಲ್ಪಟ್ಟಿತು अतिभूमिं गतम्–ಮೇರೆ ಮೀರಿದ प्रस्तुत्य–ಪ್ರಸ್ತಾಪಮಾಡಿ रन्ध्रान्वेषिणी–ಮೋಸಗಾತಿ, (ಇನ್ನೊಬ್ಬರ ದೌರ್ಬಲ್ಯವನ್ನು ಹುಡುಕುವವಳು) भाविनीं वार्ताम्–ಭವಿಷ್ಯವನ್ನು वासु–ಹುಡುಗಿ. (ಪುಟ೫೫) अन्यतरम्– ಇಬ್ಬರಲ್ಲಿ ಒಬ್ಬನನ್ನು निरुध्य–ತಡೆದು विशिष्य–ಸ್ಪಷ್ಟವಾಗಿ (ವಿಶೇಷವನ್ನು ಗುರುತಿಸಿ) दिदृक्षमाणा–ನೋಡುವ ಇಚ್ಛೆಯುಳ್ಳವಳಾಗಿ अन्यमंस्त–ಒಪ್ಪಿದಳು प्रतारितम्– ಮೋಸಗೊಳಿಸಲ್ಪಟ್ಟ सचेतनाम्–ಎಚ್ಚರಗೊಳ್ಳುವಂತೆ. (ಪುಟ೫೬) पृथुकः– ಮಗು उपालभत– ನಿಂದಿಸಿದಳು अविगणयन्ती–ಮರೆಯುವವಳಾಗಿ असितानि–ಕಪ್ಪು द्वारीकृत्य–ಮೂಲಕ अङ्ग– ಸಂಬೋಧನಾರ್ಥಕ ಅವ್ಯಯ. (ಪುಟ೫೭) प्रायोपवेशम्–ಧರಣಿ ಸತ್ಯಾಗ್ರಹ भुजङ्गादयः–ಕಾಮುಕ ಮುಂತಾದವರು साभिनिवेशम्–ಉತ್ಕಟ ಭಾವದಿಂದ भस्त्रिकायाम्–ಚರ್ಮದ ಚೀಲದಲ್ಲಿ अगाहिष्ट–ಪ್ರವೇಶಿಸಿದಳು (ಶಬ್ದಶಃ ಮುಳುಗಿದಳು) शर्वगलश्यामशर्वरान्धकारे शर्वस्य (शिवस्य) गलः (कण्ठः), तद्वत् श्यामे शर्वर्याः अन्धःकारे– ಶಿವನ ಕಂಠದಂತೆ ಕಪ್ಪಾದ ರಾತ್ರಿಯ ಕತ್ತಲಲ್ಲಿ कपाटम्–ಬಾಗಿಲನ್ನು आलिन्दके– ಉಪ್ಪರಿಗೆಯಲ್ಲಿ अङ्क्त्वा–ಬಣ್ಣಹಚ್ಚಿ वधिरः–ಕಿವುಡ अन्वयुङ्क्त–[illegible] चुबुकम्–ಗದ್ದವನ್ನು औरसे–ಸ್ವಂತ ಮಗನಲ್ಲಿ

* * *

